शारदा संस्कृत ग्रन्थमालायास्तुरीयम्प्रसूनम्

काशीस्थ–राजकीय–सर्वविध–पूर्वमध्यमपरीक्षायां निर्धारितम्

प्रथमा तृतीयसर्गात्मकं

# किरातार्जुनीयं महाकाव्यम्

सम्पादकः—
गौरीनाथ पाठक
काशी।

श्रीः

महाकवि-भारवि-श्रीदामोदर-प्रणीतं

# किरातार्जुनीयम्

सर्गद्वयात्मकम्

स्मार्तधर्मानुष्ठाननिष्ठ—कश्यपवंशावतंस—स्वधर्मधुरन्धर-
पाठकोपाह्व—जयकृष्णशर्म्मतनुजनुषा शारदा-संस्कृत-
महाविद्यालयीय—साहित्य—प्रधानाध्यापकेन
गौरीनाथशर्म्मणा विरचितया सुबोधिन्या-
ख्यया व्याख्यया कोलाचलमल्लिनाथ-
सूरि—रचितया घण्टापथ-
समाख्यया च
संवलितम्।

तच्च

काशी-शारदा-भवनात्

समुल्लसितम्

काश्याममरवाणीयन्त्रालये मुद्रयित्वा प्राकाश्यं नीतम्।
वैक्रमाब्दाः—२०१३ वृ०

# किञ्चित्प्रास्ताविकम् ।

महाकविमौलिमुकुटमणिभूतः किरातार्जुनीयप्रणेता महापुरुषः कः ? कां वा वसुमतीमलमकरोत् ? कतमञ्च कुलमनेन स्वजन्मनालंकृतम् ? कस्य वावनीनायकस्य संवर्द्धनेन स्वप्रतिभाप्रकाशिरत्नमप्रकाशयत् ? ऐतिहासिकः कश्चित्प्रबन्धोऽपीहासाद्यते न वा ? कदा चायमिमामिलामखण्डां मण्डयामास ? कथं चास्य प्रवृत्तिरस्यां महाकाव्यरचनायाम् ? कथञ्च व्यावहारिकं विज्ञानम् ? इयञ्च कृतिः कस्यचित्तुलामधिरोहति न वा ? शास्त्रान्तरेषु पाण्डित्यं कियत् कीदृशञ्च ? कीदृशश्चास्यादर्शः ? कीदृशी च काव्यप्रणयनप्रणालिः ? कं वावलम्ब्य प्रणीतमेतन्महाकाव्यम् ? के चामुष्य कृतौ गुणाः के च दोषाः ? के वाऽस्य पूर्वकालिकाः कवयः के च तदुत्तरकालिकाः ? अस्य टीकाकाराः कियन्तः ? के च ते ?, अन्यापि काचिदस्ति न वा कृतिप्रवृत्तिरित्यादिविषया इह द्वितीयसर्गात्मके स्वल्पेऽस्मिन् भागे यदि सामस्त्येन समालोचिता भवेयुस्तदा नूनं ग्रन्थगौरवमापद्येतेति सङ्क्षेपेण किञ्चिदेवेहालोच्यते । अस्य विस्तरस्तु "महाकवि-भारविर्दामोदरः" इति स्वतन्त्रे प्रबन्धे सुविहित इति नूनमवलोकनीयोऽयमेतदीयमैतिह्यमधिजिगमिषुभिः पुरातत्त्वान्वेषणविचक्षणैः सहृदयैः ।

### कोऽयं महापुरुषः, कतमश्चास्य देशः

अयं महामहिमशाली नैकदिग्विदिग्विदितकीर्तिमाली पुरातनकविविधातृप्रसवित्र्या भारतभूमेर्भूतिभूतो दामोदराभिधो महा-

कविर्भारविर्दक्षिणप्रान्तान्तर्गत—“ अचल-पुर ” ( एलिचपुर ) वास्तव्य आसीत् ।

### कतमद्वा कुलमनेन स्वजन्मनालंकृतम्

कस्मिन् वंशेऽयं समुत्पन्न इत्यत्र यद्यपि सिद्धान्ततया किमपि प्रतिपादयितुं न शक्यते तथापि एतत्प्रबन्धनायकस्य नप्तृप्रणीतावन्तिसुन्दरीकथासारस्यालोचनया कौशिकगोत्रावतंसस्य नासिक्य-( नागपुर ) प्रान्तान्तर्गतस्याचलपुर—( एलिचपुर ) वास्तव्यस्य श्रीनारायणस्वामिनः कुलमलञ्चकारेति सुस्पष्टं प्रतीयते ।

### कस्य महीपतेरास्थाने न्यवात्सीत्

असौ प्रथमं चालुक्यवंशीयस्य राज्ञो विष्णुवर्धनस्य ततो गाङ्गेयकुलावतंसस्य श्रीमतो दुर्विनीताभिधानस्य ततश्च पल्लववंशीयस्य राज्ञः सिंहविष्णोश्च संसदमलमकरोत् ।

### कथमस्य प्रवृत्तिर्महाकाव्यरचनायाम्

अस्यां महाकाव्यरचनायामस्य काचिद्विशिष्टा प्रवृत्तिर्न प्रतीयते, परं विवलाकौशलख्यापनाय काव्यरचनापाटवपरीक्षणाय वा विरचितं भवेदित्यनुमीयते । यतोहि राजशेखरः काव्यकारपरीक्षणावसरे कविगणनायां भारविमपि समुल्लिलेख ।

तद्यथाः—

राजा कविः कविसमाजं विदधीत । राजनि कवौ सर्वो लोकः कविः स्यात् । स काव्यपरीक्षायै सभां कारयेत् । सा षोडशभिः स्तम्भैश्चतुर्भिर्द्वारैरष्टभिर्मत्तवारणीभिरुपेता स्यात् । तदनुलग्नं राज्ञः केलिगृहम् । मध्येसभं चतुःस्तम्भान्तरा हस्तमात्रोत्सेधा समणिभूमिका वेदिका । तस्यां राजासनम् । तस्य चोत्तरतः संस्कृताः कवयो निविशेरन् । बहुभाषाकवित्वे यो यत्राधिकं प्रवीणः स तेन व्यपदिश्यते । यस्त्वनेकत्र प्रवीणः स सङ्क्रम्य तत्र तत्रोपविशेत् ।

ततः परं वेदविद्याविदः, प्रामाणिकाः, पौराणिकाः, भिषजो मौहूर्तिका अन्येऽपि तथाविधाः । पूर्वेण प्राकृताः कवयः, ततः परं नटनर्तकगायकवादकवाग्जीवनकुशीलवतालावचरा अन्येऽपि तथाविधाः । पश्चिमेनापभ्रंशिनः कवयः । ततः परं चित्रलेप्यकृतो माणिक्यबन्धका वैकटिकाः स्वर्णकारवर्धकिलोहकारा अन्येऽपि तथाविधाः । दक्षिणतो भूतभाषाकवयः । ततः परं भुजङ्गगणिकाः प्लवकशौभिकजम्भकमल्लाः शस्त्रोपजीविनोऽन्येपि तथाविधाः ।

तत्र यथासुखमासीनः काव्यगोष्ठीं प्रवर्तयेत्, भावयेत् परीक्षेत च । वासुदेवसातवाहनशूद्रकसाहसाङ्कादीन् सकलान् सभापतीन् दानमानाभ्यामनुकुर्यात् । तुष्टपुष्टाश्चास्य सभ्या भवेयुः । स्थाने च पारितोषिकं लभेरन् । लोकोत्तरस्य काव्यस्य च यथार्हा पूजा कवेर्वा । अन्तरान्तरा च काव्यगोष्ठीं शास्त्रवादाननुजानीयात् । मध्वपि नानवदंशं स्वदते । काव्यशास्त्रविरतौ विज्ञानिष्वभिरमेत । देशान्तरागतानाञ्च विदुषामन्यद्वारा सङ्गङ्कारयेदौचित्याद्यावत्स्थितिपूजां च । वृत्तिकामांश्चोपजपेत् संगृह्णीयाच्च । पुरुषरत्नानामेक एव राजोदन्वान् भाजनम् । राजचरितञ्च राजोपजीविनोऽप्यनुकुर्युः । राज्ञ एव ह्यसावुपकारो यद्राजोपजीविनां सत्कारः । महानगरेषु च काव्यशास्त्रपरीक्षार्थं ब्रह्मसभाः कारयेत् । तत्र परीक्षोत्तीर्णानां ब्रह्मरथयानं पट्टबन्धश्च । श्रूयते चोज्जयिन्यां काव्यकारपरीक्षा—

"इह कालिदासमेण्ठावत्रामररूपसूरभारवयः ।
हरिचन्द्रचन्द्रगुप्तौ परीक्षिताविह विशालायाम् ॥"

श्रूयते च पाटलिपुत्रे शास्त्रकारपरीक्षा—

"अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः ।
वररुचिपतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः ॥"

"C. D. Dalal M. A. and Ananta Krishna Shastri remark that after giving a very glowing picture of what an ideal p: et should be and how he should daily conduct himself, Rajashekhar says that a king should hold assemblies for the examination of the work of poet.

He should patronize poets, become the Sabhapati ( President ) like the ancient king Vasudeva, Satawahan,Shudrak and Sahasank and houour and give donations to the poets whose works stand the best. Assemblies of learned men ( Brahmasabhas ) should be held in big cities for examination of poetical and scientific works, and the successful should be conveyed in a special chariot ( Brahmaratha ) and should be crowned with a fillect. Such assemblies for examining in poetry were held in Ujjaini, Kalidas, Mentha, Amara, Rupa, Sura, Bharavi, Harichandra and Chandragupta were examined here.

Pataliputra was the centre for the examination in sciences. It was after passing from here that Upavarsha, Varsha, Panini, Pingal Vyadi, Vararuchi and Patanjali got fame as Shastrakaras.

एतदीयमैतिह्यम्

१ अथैतदीया जनश्रुतिः श्रूयते यत् भारविः [illegible]-नगरीवास्तव्य आसीत् । अस्य जनकः श्रीधरः माता च सुशीलेति । असौ भृगुकच्छवासिनः [illegible] दुहितरं रसिकवतीनाम्नीमुपयेमे । अयं स्वजनकापेक्षया शास्त्रेषु सुधीसमाजेषु चाधिकां पाण्डित्य-ख्यातिमवाप । स्वां ख्यातिं विद्वत्सु विज्ञानमहमहमिकया परि-पूर्णोऽयं पित्राऽवलोकनादिदानस्तुत्सहङ्कारमुन्मूलयितुं गृहे सभासु च भर्त्सनावचनमवोचि । सोऽपि पितुरीदृशं दैनन्दिनं व्यवहारं सोढुमशक्नुवन् पितृहत्यां चकमे । एकदा रात्रौ प्रच्छन्नो भूत्वा उपरितनगृहकोणे समासीनो भारविः पितुः शिरस उपरि पातयितु-मेकां विशालां शिलामादाय तस्य निर्गमनकालं प्रतीक्षमाणश्चिरं तूष्णीं तस्थौ । ततो निशीथसमये पितुर्मातुश्च परस्परं विश्रब्ध-मालापमश्रौषीत् ।

सुशीलोवाच—आर्यपुत्र ! भवतः सार्वकालिकं तिरस्कार-मसहमानो भारविर्द्विगुणमप्यहान्यनशनेनैवातिवाहयति औदासीन्य-मवलम्बते च । भवतश्च नायं प्रशस्यो व्यवहारः, सुतश्च ते पण्डित इति ।

श्रीधरस्तु—नात्र सन्देहावसरो यद्भारविर्न केवलं पण्डितः, किन्तु महापण्डित एव । अभिलषामि च यदेनमेकवाक्येन सर्व एव विपश्चितोऽभिनन्देयुरिति । परमहङ्कारितया उन्नतिशिखरं समारूढोऽपि जनोऽधःपातमनुभवत्येवेति मया तन्निरसनायैव केवलं तथोच्यते । कः खलु मूढो निजसुतस्याभ्युदयं नाभिलषतीति प्रत्यवोचत् । पितुरीदृशं पुत्रवात्सल्यमात्मनश्च तथाविधं गर्हित-माचरणमालोच्य भारविर्निरतिशयदुःखसन्तप्तोऽभवत् । प्रभाते पितुरन्तिकमागत्य पितृहत्याभिलाषस्य प्रायश्चित्तमपृच्छत् । पित्रा

च षण्मासान् श्वशुरगृहवासोऽवादि । अनन्तरं भारविः सर्वमात्मचेष्टितमकथयत् । तदा पिताऽयमेव प्रायश्चित्तीत्यवधार्य्य तं ततो निवारयितुमैच्छत् । इदं प्रायश्चित्तं मूर्खाणां कृते, त्वं पण्डितः पश्चात्तापेनैव पापमुक्तो भवितुमर्हसीत्यादिकमनल्पमपि पितुर्जल्पनमनाकर्ण्यैव भारविः श्वशुरसदनमगमत् । तस्य पत्नी रसिका तदा तत्रैवासीत् । जामातुरागमनेन श्वशुरादयः सर्वे सुप्रसन्ना बभूवुः । पञ्चषदिवसार्थमागतो भवेदयमित्यनुमाय तैस्तस्य महान् समादरोऽकारि । परं तस्य षण्मासवासमाकर्ण्य आत्मनश्च दारिद्र्यं पर्यालोच्य जामातरं गोचारणादिकर्म्मणि नियोज्य रसिकां विहाय सर्वे देशान्तरमगमन् । स च प्रत्यहं गोचारणादिकार्यं सम्पादयन्नासीत् । वने यावदेकतो गावश्चरन्ति तावदयं तरुतल आसीन आत्मविनोदार्थं किरातार्जुनीयं रचयितुं प्रवृत्तः । प्रत्यहं रचितान् श्लोकान् कण्टकेन वृक्षपर्णेष्वङ्कयित्वा एकत्रास्थापयत् ।

एकदा तत्पत्न्या रसिकया व्ययार्थमर्थे याचिते भारविस्तद्दिनरचितमर्द्धश्लोकं पत्राङ्कितं तस्यै प्रायच्छत् । तया च तदादाय वर्धमाननाम्नो वणिजः पत्न्याः समीपं गत्वा विक्रीय कियन्तमर्थमलम्भि । वर्धमानपत्न्याऽपि अर्धश्लोकाङ्कितं तत्पत्रं शयनीयशिरःप्रदेशे नागदन्तकेऽस्थापि । तदर्थं पतिः किञ्चिदपि नावादि । वर्धमानस्तु सञ्जातगर्भां पत्नीमजानन् तामेकाकिनीं गृहेऽवस्थाप्य वाणिज्यार्थं देशान्तरमयासीत् । यथासमयं सा सुतमेकमसूत । वर्धमानोऽपि पञ्चदशवत्सरानन्तरं गृहं प्रत्याजगाम । अन्तःपुरं प्रविश्यैवैकशय्यायां पुरुषेणैकेन सह निद्रितां पत्नीमवेक्ष्य तां व्यभिचारिणीं निश्चित्य सद्यो रोषकषायितनयनः सन् हन्तुमसिमुदयच्छत् । तस्मिन्नसौ नागदन्तके लग्ने मर्मरीभूतध्वनिना किमप्यभिदधानासापत्रपोट्टलिका शय्योपरि न्यपतत् । वणिक् तां गृहीत्वा समुद्घाट्य च तत्राङ्कितं "सहसा विदधीत न क्रियामविवेकः परमा-

पदात्पदम्" इति अर्धश्लोकं वाचयित्वा इननाभिमुखस्य पत्नीं प्राबोधयत्। सा चोत्थाय पतिमुद्वीक्ष्य परमानन्दिता सती सादरं प्रणनाम। पुत्रञ्च "वत्स ! उत्तिष्ठ, पिता ते समागतः, पश्य, प्रणम" इत्यवोचत्। अथ वर्धमानो विदितसकलवृत्तान्तस्तमर्धश्लोकमेव पत्नीपुत्रप्राणरक्षकं विदित्वा प्रशशंस। ततस्तस्य रचयितारं भारविं सादरमाकार्य सत्कृत्य च बहुधनं प्रददौ। अन्यच्च —

( २ ) मद्रासप्रान्तीय "गवर्नमेण्टओरियण्टलम्यानुस्क्रिप्ट" पुस्तकालयेन मलावारपत्तःतस्तालपत्रलिखितम् अवन्तिसुन्दरीकथा तथा अवन्तिसुन्दरीकथासार इति पुस्तकद्वयं समधिगतम्। एतच्च कीटकोटिकुट्टितत्वादतिशीर्णत्वाच्च विलुप्तप्राय एवाधिको भागः। अत एव च यत्र तत्र वाक्यसम्बन्धोऽपि सम्यङ् न सङ्घटते।

अवन्तिसुन्दरीकथा गद्यमयी अपूर्णा च। अस्याः प्रारम्भे कतिपयान् प्राक्तनकवीन् सोधारण्येनावर्णयत् कविः। अवन्तिसुन्दरीकथासारः पद्यात्मकः। ग्रन्थान्ते च 'इत्यवन्तिसुन्दरीकथासारे ( अमुकः ) परिच्छेदः" इति दृश्यते।

अस्य च प्रथमे परिच्छेदे महाकवेर्भारवेः दण्डिनश्च विषये यत्किञ्चिदप्युपनिबद्धं कविना, तदश्रुतपूर्वं सर्वथा नवीनम् ऐतिह्योपयोगि च। अवन्तिसुन्दरीकथा महाकवेर्दण्डिनः कृतिः। कथासारः कस्य कृतिरिति न ज्ञायते। अत्र च इत्थमालोक्यते—

यत् पुरा आसन् काञ्चीजनपदस्य पश्चिमोत्तरायां विदिशि आनन्दपुराभिधे नगरे कौशिकान्वया मध्यदेशे प्रसिद्धाः ब्राह्मणाः। तेभ्यः केचन ततोऽभिनिःसृत्य साम्प्रतं प्रसिद्धे नागपुरप्रान्ते एलिचपुरं समभ्येत्य स्वावासं पर्यकल्पयन्। तेषु नारायणस्वामिनाम्नः कस्यचिद्वंशतो मेधावी भारविर्विद्वान् कविर्दामोदरः सुतः

प्रादुर्बभूव। स च तत्रत्येन विष्णुवर्द्धनेन राजसूनुना प्रणयमन्वबध्नात्।

एकदा च मृगयां गच्छतामुना सह नीतो महाकविस्तत्र गहने कान्तारे आहाराभावात् क्षुत्क्षामकण्ठः कथमपि आत्मानं धारयितुम् असमर्थो मांसभक्षणम् आपद्धर्म इति मनसि चिन्तयन् पशुपिशितमशित्वा कृच्छ्रेण प्राणान् ररक्ष। ततश्च ततो विनिवर्तमानः स तत्पापविमुक्तये मातापित्रोरन्तिकमगत्वा तीर्थयात्रामारेभे। तत्प्रसङ्गेन च दिगन्तराणि भ्रमणशीलेन अनन्वर्थाभिधानेन राज्ञा दुर्विनीतेन सह तस्य परिचयः समभूत्।

एवम् एकदा राजसभायां सिंहासनासीनः काञ्चीनगर्याः पल्लववंशीयो राजा सिंहविष्णुरश्रुतपूर्वां वीणयोपगीतां—

"दनुजपतिहृदयभूधर-विभेदविज्ञातशक्तिनखकुलिशम्।
जगदुदयहेतुविष्णोरवतु वपुर्नारसिंहं वः॥

इत्यार्यां श्रुत्वा तत एव भारवेर्दामोदरस्येयमित्यवगत्य नैकोपायेन महता प्रयत्नेन कथङ्कथमप्येतमात्मसादकरोत्। महाकविरपि शिष्टमायुस्तस्यैव निकटे व्यतीयाय। अस्य च त्रयः पुत्राः। मध्यमं मनोरथं विहाय अन्ययोर्नामनी न ज्ञायेते। मनोरथस्यापि चत्वारः पुत्राः। एतेष्वपि नाम्ना केवलम् एकः सर्वकनिष्ठो वीरदत्त एव ज्ञायते। अस्य सद्धर्मचारिणी जाया गौरी। इयमेव दण्डिनामानं महाकविमजीजनत्।

## समय.

महाकविरयं षष्ठशतकात्प्राचीनः, षष्ठशतकमध्यभागभवः, सप्तमशतकारम्भभागोऽस्यैव वा मध्यभाग इति बहुधा बहवो विवदमाना दरीदृश्यन्ते। केचन कालिदाससमकालीनोऽयमित्यपि म-

न्यन्ते । सर्वाण्येतेषां सम्पर्यालोचनया परस्परं विसंवदतो न कस्यचिदेकस्यापि मतं निश्चेतुं शक्यते; तथापि—

"कृते तु सूक्ष्मेक्षिकया विचारे मते तदेदं प्रतिभाति नूनम् ।
दामोदरो भारविराविरासीच्छष्ठ्याः शताब्द्याः प्रथमार्धमध्ये॥"

इत्येव तावत्संक्षेपतो कथयितुं शक्यते ।

### व्यावहारिकज्ञानम्

अस्य व्यावहारिकं ज्ञानं नीतिनैपुण्यञ्च नीतिपूर्णपद्यैरेव पदे पदे प्रतिपद्यते । तथाहि :—

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्"
"व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः"
"स किंसखा साधु न शास्ति योऽधिपं हिताञ्च यः संशृणुतेस किंप्रभुः"
"अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः"
"परैरपर्यासितवीर्यसम्पदां पराभवोऽप्युत्सव एव मानिनाम् ।"
"व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः ।"
"अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि"
"निवसन्ति पराक्रमाश्रया न विषादेन समं नृपश्रियः ।"

"न महानिच्छति भूतिमन्यतः" ।
"सुखमुज्झन्ति न धाम मानिनः" ॥
"अहो दुरन्ता बलवद्विरोधिता" ।
"विचित्ररूपाः खलु चित्तवृत्तयः" ॥
"न तितिक्षासममस्ति साधनम्" ।
"भवन्ति भव्येषु हि पक्षपाताः" ॥
"मोहं विधत्ते विषयाभिलाषः" ।

"विश्वासयत्याशु सतां हि योगः" ॥

"प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया।"

"सहते न जनोऽप्यधःक्रियां किमु लोकाधिकधाम राजकम् ॥"

इत्यादिभिः पद्यैर्विविधं विज्ञानरहस्यं सकलनीतितत्त्वावगाहनञ्च विशदीकरोति महाकविः।

कमवलम्ब्य प्रणीतमेतन्महाकाव्यम्।

एतद्धि सुप्रसिद्धं प्रसन्नार्थगम्भीरं राजनीतिसमलङ्कृतं महाकाव्यं श्रीमन्महाभारतीयवनपर्वतो द्वैतवनमधितिष्ठतां पाण्डवानां वृत्तविशेषमवलम्ब्य स्वातन्त्र्येण विरचितम्। अत्र च किरातवेशधारिणो भगवतश्चन्द्रमौलेर्नरावतारस्य वीरशिरोमणेरर्जुनस्य च युद्धं ततश्च पाशुपतास्त्रलाभः प्रधानतयोपवर्णितः। एतच्च किरातार्जुनौ अधिकृत्य कृतमित्यतः किरातार्जुनीयमित्यस्याभिधानमन्वर्थं प्रतीयते।

अस्य नायकादिपरिज्ञानाय सङ्ग्रहश्लोको यथा—

नेता मध्यमपाण्डवो भगवतो नारायणस्यांशत-<br>
स्तस्योत्कर्षकृतेऽनुवर्णिततमो दिव्यः किरातः पुनः।<br>
शृङ्गारादिरसोऽयमत्र विजयी वीरप्रधानो रसः<br>
शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम्

अस्य नायकोऽर्जुनः धीरोदात्तः समस्तैर्नायकगुणैश्चालङ्कृतः। शृङ्गारकरुणादयोऽत्राङ्गिनः। शरद्वर्णनं, हिमालयवर्णनं, दिव्यस्त्रीणां गन्धर्वैः सह विलासादिवर्णनं, सन्ध्यावर्णनं, चन्द्रोदयप्रसाधनसुरतक्रीडाजलकेलि-पानगोष्ठी-प्रभातादीनां वर्णनमतिशयरमणीयं काव्यानुगुणमेव।

द्वासे चाप्सरसां सविभ्रमैः कामकलाविलासैरपि पार्थस्य धैर्य लोकोत्तरं वर्णयन् कविर्नायकं महावीरं, प्रतापशालिनं, श्रुतवन्तं, कुलीनञ्चावगमयन् परमामुत्कर्षप्रौढिं पुपोष।

संवादादिषु चोत्तरोत्तरं नायकस्योत्कर्षमेवावगमयतितरां महाकविः। साहित्यजगति लोकोत्तरा चित्रयुद्धवर्णनशैली प्रथमैवास्य महाकवेः।

यद्यप्येतादृशीमेव दिशमवलम्ब्य वर्णनपराः सन्त्यन्येऽपि महाकवयः, परं श्रेयोलाभस्तु भारवेरेवेति न संशयावहमेतत्।

अस्य प्रथमादिसर्गत्रये भारवेः सर्वाधिकः समुद्गारः प्रचण्डपाण्डित्यस्य। भीमस्य ऊर्जस्वलं वाक्यं द्रौपद्याश्च समरपक्षपातिन्या नीतिपरिप्लुता मन्युव्यवसायदीपिनीः गिरः क्षत्रियरमणीनां भारतीयानामनुगुणा एवेति परं प्रफुल्लते गौरवेण हृदयमस्माकम्।

अयं महाकवी राष्ट्रदशां तदुपयुक्तमुपदेशञ्च प्रतिपादयन् प्रतिभाति प्रतिभासम्पन्नो महाशयो देशदशानिदर्शकश्च।

काव्यञ्चेदं कीदृग्रहस्यगर्भमिति वक्तुमसमर्थानामप्यस्माकं साकल्येन तत्प्रतिपादनं सर्वथाऽसुशकम्।

केचन भारवेर्माघस्य, श्रीहर्षस्य च विषये सन्ति बहवः सुप्रसिद्धाः श्लोकाः। यथा—

"तावद्भा भारवेर्भाति यावन्माघस्य नोदयः।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥"
"माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे।
स्मरन्तो भारवेरेव कवयः कपयो यथा॥"

अत्र केचिन् माघस्य भारवितः प्रकर्षं समुद्गिरन्ति। केवलं

बाह्याडम्बरमुग्धचेतसः, चिक्कणतासम्मीलितदृशो न जानन्ति नारिकेळफलमिवान्तःसरसप्रसन्नमधुरसरस्वतीस्रोतस आस्वादमलौकिकं भारवेः।

माघस्य पाण्डित्यं भारवेरपेक्षया विशिष्टमुपवर्णयन्ति। अस्य पुरतस्ते महाकविमेनं सामान्यं सम्मन्वते, नैषधकारस्य श्रीहर्षस्य च पुरत उभावप्येतौ क्षुद्रौ कीटपतङ्गाविवेति समर्थयन्ति। अहो मोहपरम्परा।

माघस्तु कविरेवासीत्। तस्य च पदयोजनायां मधुरायामेवोत्कृष्टत्वम्। अन्येषु च विषयेषु सर्वत्रैवानुचकार कविकुलशिरोमणिं भारविमिति जानन्त्येवकाव्यतत्त्वज्ञा भारविभारत्युपासकाः।

प्रतिसर्गान्तं माघे किरात इव श्रीशब्दप्रयोगं, ऋतुवर्णनादिषु च शब्दवैचित्र्यं विनियोजयन्नपि महाकविर्माघोऽन्तःसरसाया भारवेर्भारत्या अनिर्वचनीयतां लोकोत्तरां चमत्कृतिं तुलयितुं नालंबभूवेति नाविदितं तत्त्वविमर्शकानाम्।

भारविस्तु साहित्यदृष्ट्या व्यङ्ग्यगर्भत्वं, अलंकारनैपुण्यं, वर्णने समुचितशब्दप्रयोगं, लावण्यविलसितां ललनामिव प्रदर्शयन् सर्वानप्यतिशेते महाकवीनित्यलमत्यधिकं-वाक्पाटवसंदर्शनेन।

सन्ति चैतस्य बह्व्यष्टीकास्तासु च मल्लिनाथटीकया पिपठिषूणां परीक्षो त्तीर्षूणाञ्च च्छात्राणां सम्यग्लाभाभावेन, सुगमतया तत्त्वार्थमवगन्तुमिच्छूनां गूढाशयज्ञापनायैवैतत् सुबोधिनीटीकासहितं संस्करणं विविधैरुपयोगिविषयैः समलंकृत्य प्राकाश्यत। मनुष्यजनसुलभदोषतया मतिमान्द्यादप्युर्वरितानवद्यान् क्षमासारा विद्वांसः स्वयमपोहन्त्विति--

५-७-५६ | विदुषां वशंवदस्य--
शारदाभवनम्, काशी। | *गौरीनाथ पाठकस्य।*

पद्यात्मक-संक्षिप्त-कथा

प्रथमः सर्गः

तत्र द्वैतवने वनेचरमुखाज्ज्ञात्वा द्विषाञ्चेष्टितं
कृष्णामेत्य युधिष्ठिरो रिपुपराभूतिं वचश्चेदमगात्।
कृष्णाकर्ण्य मनस्विनी निजतिरस्कारं स्वकन्तं नृपं
क्षात्रोऽसि, अथ पौरुषं, जयरिपूनित्याह निन्याग्रहा ॥१॥

द्वितीयः—सर्गः

भीमः तात विभो बहुलकमनया तत्रापवर्जीकृत
मात्तं चेद्गमनक्रमात् निजपदं दोर्भ्यां किमाभ्यां मम।
भीमं भीमवचो विचिन्त्य नृपती मा तात धैर्यं जही-
स्त्येवं शास्ति तं शनैः स भगवान् व्यासः कृतोऽप्यासदत् ॥२॥

—:०:—

गद्यात्मक—कथासंक्षेपः

प्रथमः सर्गः

युधिष्ठिरनियोगात् कश्चिद्वनेचरो दुर्योधनस्य चरितं सम्यक् विदित्वा द्वैतवनं प्रत्याजगाम। ततो युधिष्ठिरं प्रणम्य प्रोवाच। भवतः प्रियमप्रियं वा भवतु सर्वथा सत्यवचनमेव कथयामि, श्रूयताम्। स दुर्योधनश्छलेन भवदीयं राज्यमात्मसात्कृत्वा इदानीं नयेन सर्वेषामनुरञ्जनं कर्त्तुं यतते। तथाहि अनलसः सन् सर्वाणि कर्माणि यथासमयं करोति। अमात्यादिषु बन्धुवद् व्यवहरति।

अन्यान् राज्ञः सामदानाभ्यां वशीकरोति । रिपौ सुते च अपक्ष-पातं यथापराधं दण्डं प्रणयति । युद्धार्जितानर्थान् सैन्येभ्य एव वितरति । गुणानुरक्ताः सर्वे राजानः प्रतिदिनं तस्मै नानोपाय-नानि प्रयच्छन्ति, सैन्याश्चैकमत्यमवलम्ब्य तस्य विजयं साध-यन्ति । आप्तचरैः सर्वेषां राज्ञां चेष्टितान्यवगच्छति । दुःशासनं यौवराज्येऽभिषिच्य स्वयमनासक्त इव भोगेषु सततं यात्रादिक-मनुतिष्ठति । एवमाचरन्नप्यसौ भवतो बिभेत्येव । अत आशु प्रति-क्रियां कर्त्तुमर्हति भवान् ।

एवमुक्त्वा प्रस्थिते वनेचरे युधिष्ठिरो द्रौपद्या भवनं प्रविश्य तत्र सर्वान् भ्रातॄनाहूय सर्वमकथयत् ।

तदाकर्ण्य द्रौपद्युवाच । विज्ञतमं भवन्तं प्रति अज्ञया मम उपदेशवचनं यद्यपि नोचितं तथापि दुःखाकुलाहं किञ्चित् कथ-यामि । ये शठेषु शाठ्यं न समाचरन्ति ते नाशं प्राप्नुवन्ति । त्वदन्यो न कोऽपि नीरवः सन् शत्रवे राज्यं ददाति । शत्रुकृतमेवं दुःसहं परिभवं प्राप्यापि कथं ते क्रोधो न जायते, क्रोधहीनं राजानं न कोऽपि संमानयति । महावीराणां भ्रातॄणाम् स्वस्य च ईदृशीं दुर्गतिं दृष्ट्वा कथं ते मन्युर्न ज्वलति । अतोऽहमनुन-यामि शत्रूणां वधाय यतस्व । अथ यदि क्षमामेवावलम्बसे तदा कार्मुकं परित्यज्य इह वने तपश्चर ।

*द्वितीयः सर्गः ।*

द्रौपद्या वचनं समर्थयन् भीमसेन उवाच । द्रौपद्या यद् यद् उक्तं तत् सर्वं समीचीनं मन्ये । तदनुसारेण भवताऽऽचरित-व्यम् । सर्वविद्यापारदर्शिनो भवतः कथमीदृशो बुद्धिविपर्य्ययो जातः । द्विषतामभ्युदयो न सोढव्यः । अचिरेण आत्मपौरुषं प्रका-शय । समयपरिपालने तदायत्तं राज्यं कथमपि ग्रहीतुं समर्थो न भविष्यसि ।

इत्युक्तवन्तं भीमं युधिष्ठिरः प्रत्याह । सहसा किमपि कार्यं न कर्त्तव्यम् । क्रोधवशेन परिणाममविचिन्त्य कार्यंकरणे सिद्धिर्न भविष्यति । अतः समयपरिपालनं कर्त्तव्यमेव । अन्यथा ये राजानोऽस्मत्पक्षपातिनो वर्त्तन्ते तेषामपि वयं विरागभाजनानि भविष्यामः । योऽन्तःशत्रुं क्रोधं जेतुमसमर्थः स कथं बहिःशत्रून् जेतुं शक्नुयादिति ।

अत्रान्तरे वेदव्यासः सहसा तत्रागतः । तं दृष्ट्वोत्थाय सत्कृत्य च राजा आसनं ददौ ।

---

*सर्गद्वयस्थित—सुभाषितानि ।*

*प्रथमसर्गे*

न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥२॥

हितं मनोहारि च दुर्लभं वचः ॥४॥

समुन्नयन् भूतिमनार्य्यसंगमाद् वरं विरोधोऽपि समं महात्मभिः ॥८॥

प्रतीयते धातुरिवेहितं फलैः ॥२०॥

अहो दुरन्ता बलवद्विरोधिता ॥२३॥

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ॥३०॥

विचित्ररूपाः खलु चित्तवृत्तयः ॥३७॥

परैरपर्य्यासितवीर्य्यसंपदां पराभवोऽप्युत्सव एव मानिनाम् ॥४०॥

*द्वितीयसर्गे*

स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः ॥६॥

ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः ॥५॥

न महानिच्छति भूतिमन्यतः ॥१८॥

२

अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥२०॥

प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥२१॥

सहसा विदधीत न क्रियां अविवेकः परमापदां पदम् ॥३०॥

शुचि भूषयति श्रुतं वपुः ॥३२॥

अविभिद्य निशाकृतं तमः प्रभया नांशुमताऽप्युदीयते ॥३६॥

असुरक्षा हि बहुच्छलाः श्रियः ॥३९॥

न तितिक्षासममस्ति साधनम् ॥४३॥

सहते न जनोऽप्यधःक्रियां किमु लोकाधिकधाम राजकम् ॥४१॥

विपदन्ता ह्यविनीतसंपदः ॥५२॥

## पात्राणां संक्षिप्तः परिचयः

(१) (वनेचरः)—द्वैतवनवास्तव्यः, परमचतुरः, इङ्गितज्ञः, मेधावी, राजनीतिज्ञः कश्चन उत्तमः किरातः।

(२) (युधिष्ठिरः)—कुन्तीपुत्रः, पाण्डुपुत्राणां प्रथमः, सदाचरणनिरतः, धर्मधनः, धर्मांशत्वाद्धर्मराज इति प्रसिद्ध आसीत्।

(३) (द्रौपदी)—पञ्चनदजनपदाधिपते राज्ञोद्रुपदस्य कन्या आसीत्।

(४) (दुर्योधनः)—अम्बिकापुत्रस्य धृतराष्ट्रस्य एकोत्तरशतसंख्यकेषु सर्वप्रथमः, स्वभावत एव पाण्डवविरोधी कार्येण प्रकृत्या च परमः क्रूर आसीत्।

(५) (भीमः)—युधिष्ठिरानुजः, अर्थात् द्वितीयः पाण्डवः, प्रबलपराक्रमः, आत्माभिमानी दुर्योधनादीनां स्वभावतः शत्रुरासीत्।

(६) (नकुलसहदेवौ)—माद्रीगर्भविनिःसृतावेतौ यमजौ। एतयोः सहदेवः गणितशास्त्रे अपूर्वः कुशलः नकुलस्तु अश्वादिपशुशास्त्रे प्रवीण आसीत्।

(७) (अर्जुनः)—कुन्ती-गर्भसम्भूतोऽयं धनुर्विद्यायामद्वितीयः स्वसहजातानामान्तिमः।

(८) (राधेयः कर्णः)—अयं अविवाहितायामेव कुन्त्यामुत्पन्नः लोकोत्तरपराक्रमशाली सदैवार्जुनप्रतिस्पर्धी दुर्योधनस्य प्राणसम आसीत्

(९) (भीष्मः)—गङ्गागर्भसम्भूतोऽयं परमप्रसिद्धपराक्रमः शन्तनोःपुत्रः।

(१०) (जामदग्न्यः)—रेणुकायां जातः, जमदग्नेः पुत्रः परशुरामोऽयं भगवतो विष्णोः षष्ठाऽवतार आसीत्।

(११) (द्रोणः) सकलशास्त्रविद् विशेषतो धनुर्वेदे सिद्धहस्तः परमाचार्यो भारद्वाजगोत्रोत्पन्नः द्रुपदस्य बालमित्रम् आसीत्।

(१२) (यक्षः)—किन्नरवर्षनिवासी देवयोनिविशेषो विशिष्टशक्तिशाली, कुवेरानुचरः।

(१३) (व्यासः)—अष्टादशपुराणोपपुराणानां रचयिता पराशरपुत्रो व्यासः विष्णोरंशेन भूमाववततार।

## विशिष्टप्रष्टव्यस्थानानि

(१) किरातार्जुनीयमिति नामान्वर्थमनन्वर्थं वा ?

(२) किरातार्जुनीयस्य कर्ता भारविरुत दामोदरः, दामोदरश्चेत्तर्हि किं भारविरिति तस्यैव नामान्तरमुपाधिर्वा ?

(३) कश्चास्य देशः, कदा चायं प्रादुरभूत्, कस्मिन् समये निरमायि तेनेदं काव्यरत्नम् ?

(४) राज्यं पुनः स्वायत्तीकरणार्थं युधिष्ठिरस्य भीमादेर्वा कस्य नीतिर्न्याय्या ?

(५) नदीमातृका देवमातृकाश्च देशाः के ?

(६) युधिष्ठिरदुर्योधनयोः कथं पाण्डवकौरव इति संज्ञे तद् विविच्य प्रतिपादनीयम् ।

(७) सहसा विदधीत न क्रियामित्यत्र किमप्यैतिह्यं वर्तते नवा ?

(८) दुर्योधनचरितावगतये वनेचरो ब्रह्मचारिवेष एव कथं स्वीचकार ?

(९) सत्स्वपि भीमादिषु कथमर्जुनायैव व्यासो विद्यामन्वितरत् ।

(१०) द्रौपद्या उक्तिर्नातिविस्तृतया स्वरचितया गीर्वाणवाण्याऽभिलिख्यताम्

(११) पञ्चानापि पाण्डुपुत्राणां नामान्यभिलिख्य दुर्योधनः कपटद्यूतेन कुतस्तेषां राज्यमपजहारेति विशदमालोच्यताम् ।

(१२) एतन्महाकाव्यं कविना कं विषयमवलम्ब्य प्रणीतमैतिहासिकः प्रबन्धश्चात्रत्यः कीदृश इति सुस्पष्टमभिधीयताम् ।

(१३) दुर्योधनो राज्यायत्तीकरणानन्तरं कया रीत्या भृत्यादिभिः सह व्यवहरति स्म ?

—:※:—

❀ श्रीः ❀

# किरातार्जुनीयम्

घण्टापथ-सुबोधिनीटीकाद्वयोपेतम् ।

## प्रथमः सर्गः ।

---

किरातः—व्याधरूपधारी महादेवः । अर्जुनः—तृतीयः पाण्डवः । किरातश्च अर्जुनश्च किरातार्जुनौ (द्वन्द्वः) तौ अधिकृत्य कृतं काव्यं किरातार्जुनीयम् । "अधिकृत्य कृते ग्रन्थे" (४।३।८७) इत्यनुवर्त्तमाने "शिशुक्रन्द-यमसभद्वन्द्वेन्द्रजननादिभ्यश्छः" (४।३।८७) इति छः (ईय) ।

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥ १ ॥

अथ तत्रभवान् महाप्रतिभारविर्भारविर्नाम महाकविः "काव्यं यश-सेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मित-तयोपदेशयुजे" तथा "अयं सर्वत्र सुखदः श्रवणेऽनुष्ठितावपि" इत्याद्या-लङ्कारिकवचनप्रामाण्यात् काव्यस्य काव्योपदेशस्य चानेकश्रेयःसन्तानपर-म्पराधायकतां "काव्यालापाँश्च वर्जयेत्" इति निषेधवाक्यस्य दुष्टकाव्य-विषयताञ्च समनुपश्यन् किरातार्जुनीयाख्यं महाकाव्यमिदं प्रणिनीषु-र्निर्विघ्नेन प्रारिप्सितपरिसमाप्तिकामः, चिकीर्षितस्यास्य निर्विघ्नपरिसमाप्तये "आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम्" इत्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात् वनेचरस्य युधिष्ठिरसमागमरूपं वस्तु प्रथमं निर्दिशति।

श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
सवर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः ॥ १ ॥

(अन्वयः) (युधिष्ठिरः) कुरूणाम्, अधिपस्य, श्रियः, पालनीं, प्रजासु, वृत्तिं-वेदितुं, यम्, अयुङ्क्त, वर्णिलिङ्गी, सः, वनेचरः, विदितः, (सन्) द्वैतवने, युधिष्ठिरं, समाययौ ॥ १ ॥

श्रिय इति ॥ आदितः श्रीशब्दप्रयोगाद्वर्णगणादिशुद्धिर्नात्रातीवोपयुज्यते । तदुक्तम्—'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥' इति । कुरूणां निवासाः कुरवो जनपदाः । 'तस्य निवासः' इत्यण्प्रत्ययः । जनपदे लुप् । तेषामधिपस्य दुर्योधनस्य संबन्धिनीम् । शेषे षष्ठी । श्रियो राजलक्ष्म्याः । 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । पाल्यतेऽनयेति पालनी ताम्, प्रतिष्ठापिकामित्यर्थः, प्रजारागमूलत्वात्सम्पद इति भावः । 'करणाधिकरणयोश्च' इति करणे ल्युट् । 'टिड्ढाणञ्—' इत्यादिना ङीप् । प्रजासु जनेषु विषये । 'प्रजा स्यात्सन्ततौ जने' इत्यमरः, वृत्तिं व्यवहारं वेदितुं ज्ञातुं यं वनेचरमयुङ्क्त नियुक्तवान् । वर्णः प्रशस्तिरस्यास्तीति वर्णी ब्रह्मचारी । तदुक्तम्—स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीते ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥' एतदष्टविधमैथुनाभावः प्रशस्तिः । वर्णाद् ब्रह्मचारिणि' इतीनिप्रत्ययः । तस्य लिङ्गं चिह्नमस्यास्तीति वर्णिलिङ्गी । ब्रह्मचारिवेषवानित्यर्थः । स नियुक्तः वने चरतीति वनेचरः किरातः । 'भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः, इत्यमरः । 'चरेष्टः' इति टप्रत्ययः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । विदितं वेदनमस्यास्तीति विदितः । परवृत्तान्तज्ञानवानित्यर्थः । 'अर्श आदिभ्योऽच्' इत्यच्प्रत्ययः । उभयत्रापि 'पीता गावः, भुक्ता ब्राह्मणाः', विभक्ता भ्रातरः' इत्यादिवत्साधुत्वम् । न तु कर्तरि क्तः । सकर्मकेभ्यस्तस्य विधानाभावात् । अत एव भाष्यकारः—अकारो मत्वर्थीयः । विभक्तमेषामस्तीति विभक्ताः । पीतमेषामस्तीति पीताः

इति सर्वत्र । अथवोत्तरपदलोपोऽत्र द्रष्टव्यः । विभक्तधना विभक्ताः, पीतोदकाः पीता इति । अत्र लोपशब्दार्थमाह कैयटः—"गम्यार्थस्याप्रयोग एव लोपोऽभिमतः । 'विभक्ता भ्रातरः' इत्यत्र च धनस्य यद्विभक्तत्वं तद् भ्रातृषूपचरितम् । 'पीतोदका गावः' इत्यत्राप्युदकस्य पीतत्वं, गोष्वारोप्यते" इति तद्वदत्रापि वृत्तिगतं वेदितत्वं वेदितरि वनेचर उपचर्यते । एतेन 'वनाय पीतप्रतिबद्धवत्साम्,' 'पातुं न प्रथमं व्यवस्यति, जलं युष्मास्वपीतेषु या' एवमादयो व्याख्याताः । अथवा विदितो विदितवान् । सकर्मकादप्यविवक्षिते कर्मणि कर्तरि क्तः । यथा 'आशितः कर्ता' इत्यादौ । यथाहुः—"धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥' इति । द्वैतवने, द्वैताख्ये तपोवने यद्वा द्वे इते गते यस्मात्तद् द्वीतम् । द्वीतमेव द्वैतम् । तच्च तद्वनं च तस्मिन् शोकमोहादिवर्जित इत्यर्थः । युधि रणे स्थिरं युधिष्ठिरं धर्मराजम् । 'हलदन्तात्सप्तम्याः संज्ञायाम्' इत्यलुक् । 'गवियुधिभ्यां स्थिरः' इति षत्वम् । समाययौ संप्राप्तः । अत्र 'वने वनेचरः' इति द्वयोः स्वरव्यञ्जनसमुदाययोरेकदैवावृत्त्या वृत्त्यनुप्रासो नामालङ्कारः । अस्मिन्सर्गे वंशस्थवृत्तम । तल्लक्षणम्—'जतौ तु वंशस्थमुदीरितं जरौ, इति ॥ १ ॥

( सुबो० ) ( युधिष्ठिरः ) कुरूणाम् अधिपस्य ( कुरुदेशपतेः दुर्योधनस्य ) श्रियः ( राज्यलक्ष्म्याः ) पालनीं ( पालनप्रकारवतीं ) प्रजासु ( राज्यस्थेषु जनेषु ) वृत्तिं ( व्यवहारं ) वेदितुं ( ज्ञातुं ) यं ( वनेचरम् ) अयुङ्क्त ( नियोजितवान् ) वर्णिलिङ्गी ( ब्रह्मचारिवेशधारी ) सः, वनेचरः ( द्वैतवनचारी कश्चित् ) विदितः ( तद्विषये ज्ञानवान् सन् ) द्वैतवने ( द्वैताख्ये तपोवने, अवस्थितं ) युधिष्ठिरं, समाययौ ( सङ्गतवान् ) ॥ १ ॥

( समासः ) पाल्यते अनया इति पालनी ताम् । वर्णी ब्रह्मचारी, तस्य लिङ्गं चिह्नं दण्डकमण्डल्वादि विद्यते अस्य इति वर्णिलिङ्गी । द्वे इते गते यस्मात्तद् द्वीतं, तदेव द्वैतं, द्वैतञ्च तद्वनं द्वैतवनं तस्मिन् ॥ १ ॥

(वाच्यपरिवर्तनम्)…(युधिष्ठिरेण) यः अयुज्यत । तेन वर्णिलिङ्गिना विदितेन समाययौ युधिष्ठिरः…वनेचरेण ॥१॥

(सरलार्थः) द्यूतक्रीड़ायां । दुर्य्योधनेन पराजितो राजा युधिष्ठिरः भ्रातृभिः द्रौपद्या च सह वनं गतः, त्रयोदशवर्षान्ते राजधानीं प्रतिगत्य प्रजानामनुरागभाजनं भविष्यामि न वेत्याशङ्क्य प्रजानामुपरि दुर्योधनस्य व्यवहारं परिज्ञातुं वनेचरमेकं प्रेषितवान् । स च ब्रह्मचारिवेषेण गत्वा सर्वं दुर्योधनचरितं विदित्वा द्वैतवने कृतवासं युधिष्ठिरं प्रत्याजगाम ॥१॥

(हिन्दी) जुए में दुर्योधन से हारकर राजा युधिष्ठिर अपने भाई तथा द्रौपदी के साथ वन गये, तेरह वर्ष बाद राज्य में पुनः लौट आने पर प्रजा मेरा स्वागत और सत्कार करेगी वा नहीं, तथा दुर्योधन का प्रजाजनों से कैसा व्यवहार है इसको जानने के लिये उन्होंने राज्य में एक वनेचर भेजा । ब्रह्मचारी का वेष धारण कर वह वनेचर राज्य का पूरा समाचार लेकर द्वैतवन में युधिष्ठिर के पास लौट आया ॥१॥

वनेचरस्यापि तस्य शिष्टाचारवेदितृत्वम् अकार्पण्यं च दर्शयन्नाह—

कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यतः ।
न विव्यथे तस्य मनो न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥२॥

(अन्वयः) कृतप्रणामस्य, सपत्नेन, जितां, महीं, महीभुजे, निवेदयिष्यतः, तस्य, मनः, न, विव्यथे । हि, हितैषिणः, मृषा, प्रियं, प्रवक्तुं, न, इच्छन्ति ॥२॥

कृतप्रणामस्येति—कृतप्रणामस्य तत्कालोचितत्वात्कृतनमस्कारस्य । सपत्नेन रिपुणा दुर्योधनेन । "रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः" इत्यमरः । जितां स्वायत्तीकृतां महीं महीभुजे युधिष्ठिराय । क्रियाग्रहणात्संप्रदानम् । निवेदयिष्यतो ज्ञापयिष्यतः । 'लृटः सद्वा' इति शतृप्रत्ययः । तस्य वनेचरस्य मनो न विव्यथे । कथमीदृगप्रियं राज्ञे

विज्ञापयामीति मनसि न चचालेत्यर्थः । 'व्यथ भयचलनयोः' इति धातोर्लिट् ॥ उक्तमर्थमर्थान्तरन्यासेन समर्थयते—नहीति । हि यस्मात् । हितमिच्छन्तीति हितैषिणः स्वामिहितार्थिनः पुरुषाः, मृषा मिथ्याभूतं प्रियं प्रवक्तुं नेच्छन्ति । अन्यथा कार्यविघातकतया स्वामिद्रोहिणः स्युरिति भावः ॥ 'अमौढ्यममान्यममृषाभाषित्वमभ्यूहकत्वं चेति चारगुणाः' इति नीतिवाक्यामृते ॥ २ ॥

( सुबो० ) कृतप्रणामस्य ( आदौ कृतनमस्कारस्य, पश्चात् ) सपत्नेन ( शत्रुणा दुर्योधनेन ) जितां ( वशीकृतां ) महीं ( पृथिवीं ) महीभुजे ( राज्ञेयुधिष्ठिराय ) निवेदयिष्यतः ( विज्ञापयिष्यतः ) तस्य ( वनेचरस्य ) मनः ( हृदयं ) न विव्यथे ( न विचलितं बभूव ) । हि ( यतः ) हितैषिणः ( स्वामिहितार्थिनो जनाः ) मृषा ( मिथ्याभूतं ) प्रियं ( प्रीतिकरं वचनं ) प्रवक्तु ( कथयितुं ) न इच्छन्ति ( न अभिलषन्ति ) ॥ २ ॥

( समासः ) कृतः प्रणामो येन सः तस्य, महीं भुनक्तीति तस्मै । निवेदयिष्यतीति निवेदयिष्यन् तस्य निवेदयिष्यतः । हितमिच्छन्ति ये ते हितैषिणः ॥ २ ॥

(वाच्य०) विव्यथे···मनसा ।···इष्यते हितैषिभिः ॥ २ ॥

( सरलार्थः ) असौ वनेचरः आगत्य प्रथमं युधिष्ठिरं प्रणनाम । ततः शत्रुणा दुर्योधनेन सर्वं राज्यं सुशासनेन स्वायत्तीकृतमित्यप्रियं वक्तुमुद्यतस्यापि तस्य मनो दुःखितं न बभूव । यतः स्वामिनो हितार्थिनो ये भवन्ति, ते केवलं मनस्तुष्ट्यै मिथ्या प्रियं वचनं वक्तुं नेच्छन्ति ॥ २ ॥

( हिन्दी) उस वनेचर ने आकर पहिले युधिष्ठिर को प्रणाम किया । इसके बाद उसने दुर्योधन द्वारा जीते गये राज्य का वर्णन आरंभ किया । किन्तु इस अप्रिय वृत्तान्त को कहने में उसे जरा भी दुःख नहीं हुआ । क्योंकि स्वामी के शुभचिन्तक केवल उनके मन के सन्तोष के लिये असत्य प्रिय नहीं बोलते॥२॥

तथापि प्रियवचनार्हे राज्ञि कटुनिष्ठुरोक्तिर्न युक्ता इत्याशङ्क्य सापि स्वाम्यनुज्ञया न दुष्यतीत्याशयेनाह—

द्विषां विघाताय विधातुमिच्छतो रहस्यनुज्ञामधिगम्य भूभृतः ।
स सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थामिति वाचमाददे॥३॥

( अन्वयः ) रहसि, सः, द्विषां, विघाताय, विधातुम्, इच्छतः, भूभृतः, अनुज्ञाम्, अधिगम्य, सौष्ठवौदार्य्यविशेषशालिनीं, विनिश्चितार्थां, इति, वाचम्, आददे ॥ ३ ॥

द्विषामिति—रहस्येकान्ते स वनेचरो द्विषां शत्रूणाम्। कर्मणि षष्ठी। विघाताय। विहन्तुमित्यर्थः। 'तुमर्थाच्च भाववचनात्' इति चतुर्थी। 'भाववचनाच्च' इति तुमर्थे घञ्प्रत्ययः ॥ अत्र तादर्थ्यमपि न दोषः। तथापि प्रयोगवैचित्र्यविशेषस्याप्यलङ्कारत्वादेवं व्याचक्षते। विधातुं व्यापारं कर्तुमिच्छतः 'समानकर्तृकेषु तुमुन्' द्विषो विहन्तुमुद्युक्तज्ञानस्येत्यर्थः। अत एव भूभृतो युधिष्ठिरस्यानुज्ञामधिगम्य। सुष्ठु भावः सौष्ठवं शब्दसामर्थ्यम्। सुष्ठुशब्दादव्ययादुद्गात्रादित्वादञ्प्रत्ययः। उदारस्य भाव औदार्यमर्थसंपत्तिः तयोर्द्वन्द्वः सौष्ठवौदार्ये। अत्रौदार्यशब्दस्याजाद्यन्तत्वेऽपि 'लक्षणहेत्वोः क्रियायाः' इत्यत्राल्पस्वरस्यापि हेतुशब्दस्य पूर्वनिपातमकुर्वता सूत्रकृतैव पूर्वनिपातस्यानित्यत्वज्ञापनान्न पूर्वनिपातः। उक्तं च काशिकायाम्—'अयमेव लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारचिन्हम्, इति। त एव विशेषः। तयोर्वा विशेषः। तेन शालते शोभत इति सौष्ठवौदार्यविशेषशालिनी ताम्। ताच्छील्ये णिनिः। विनिश्चितार्थां विशेषतः प्रमाणतो निर्णीतार्थाम्। इति वक्ष्यमाणरूपां वाचमाददे स्वीकृतवान्। उवाचेत्यर्थः।३

( सुबो० ) रहसि ( निर्जने ) सः ( वनेचरः ) द्विषां ( शत्रूणां ) विघाताय (विनाशाय) विधातुम् ( व्यापारं कर्तुम्) इच्छतः (अभिलषतः) भूभृतः ( राज्ञः युधिष्ठिरस्य ) अनुज्ञाम् ( आदेशम् ) अधिगम्य (प्राप्य) सौष्ठवौदार्य्यविशेषशालिनीं ( उत्कृष्टशब्दार्थसमन्वितां ) विनिश्चितार्थां

( विशेषप्रमाणेन निर्णीतार्थाम् ) इति ( इमां वक्ष्यमाणां ) वाचं ( वाणीम् ) आददे ( स्वीकृतवान्, उवाच इत्यर्थः ) ॥ ३ ॥

( समासः ) सुष्ठु ( शोभनस्य ) भावः सौष्ठवं, सौष्ठवञ्च औदार्य्यञ्च सौष्ठवौदार्य्ये तयोर्विशेषः ( उत्कर्षः ) तेन शालते शोभते या ताम् । विशेषेण प्रमाणेन निश्चितः ( निर्णीतः ) अर्थः ( अभिप्रायः ) यस्यास्ताम् ॥ ३ ॥

( सरलार्थः ) शत्रूणां प्रतिकारं विधातुमिच्छता युधिष्ठिरेण निर्जनस्थानं नीत्वा अकपटेन यथातथं वक्तुमादिष्टो वनेचरः साधुशब्दयुक्तं सदर्थसहितं च स्वाभिप्रायं व्यञ्जकं वचनमुवाच ॥ ३ ॥

( हिन्दी ) शत्रुओं से बदला लेने की इच्छा करने वाले युधिष्ठिर ने एकान्त में उस वनेचर को सत्य बोलने के लिये आज्ञा दी । वनेचर भी सब कुछ समझ कर भावपूर्ण वचन बोला ॥ ३ ॥

प्रथमं तावद् अप्रियनिवेदकमात्मानं प्रति अक्षोभं याचते—

क्रियासु युक्तैर्नृप ! चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः ॥ ४ ॥

( अन्वय ) नृप ! क्रियासु, युक्तैः, अनुजीविभिः, चारचक्षुषः, प्रभवः, न, वञ्चनीयाः । अतः, असाधु साधु, वा क्षन्तुम्, अर्हसि । हितं, मनोहारि, च, वचः, दुर्लभम् ॥ ४ ॥

क्रियास्विति ॥ हे नृप ! क्रियासु कृत्यवस्तुषु युक्तैर्नियुक्तैरनुजीविभिर्भृत्यैः । चारादिभिरित्यर्थः । चरन्तीति चराः पचाद्यच् । चरेः पचाद्यजन्तात्प्रज्ञादित्वादण्प्रत्ययः । त एव चक्षुर्येषां ते चारचक्षुषः । 'स्वपरमण्डले कार्याकार्यावलोकने चाराश्चक्षूंषि क्षितिपतीनाम्' इति नीतिवाक्यामृते । प्रभवो निग्रहानुग्रहसमर्थाः स्वामिनो न वञ्चनीया न प्रतारणीयाः । सत्यमेव वक्तव्या इत्यर्थः । चारापचारे चक्षुरपचारवद्राज्ञां पदे पदे निपात इतिभावः । अतोऽप्रतार्यत्वाद्धेतोः । असाध्वप्रियं साधु प्रियं वा । मदुक्तमि-

ति शेषः क्षन्तुं सोढुमर्हसि । कुतः । हितं पथ्यं मनोहारि प्रियं च वचो दुर्लभम् । अतो मद्वचोऽपि हितत्वादप्रियमपि क्षन्तव्यमित्यर्थः ॥ ४ ॥

( सुबो० ) हे नृप ! ( राजन् ) क्रियासु ( कर्त्तव्यकर्म्मसु ) युक्तैः ( नियुक्तैः ) अनुजीविभिः ( भृत्यैः ) चारचक्षुषः प्रभवः ( दूतलोचनाः-स्वामिनः ) न वञ्चनीयाः ( मिथ्यावचनैः न प्रतारणीयाः ) अतः (अस्माद् हेतोः, अप्रतार्य्यत्वाद्धेतोः ) साधु असाधु वा ( प्रियम् अप्रियं वा मदुक्तं वचनं ) क्षन्तुं ( सोढुम् ) अर्हसि ( योग्यो भवसि ) हितं ( पथ्यं ) मनोहारि प्रियं च, वचः ( वाक्यं ) दुर्लभं (केनापि वक्तुं न शक्यमित्यर्थः ) ॥ ४ ॥

( समासः ) अनु पश्चाज्जीवन्ति ते तैः । चरन्तीति चराः, चरा एव चाराः, त एव चक्षूंषि स्वपरमण्डले कार्य्याकार्यावलोकनसाधनं येषां ते तथोक्ताः । मनोहरतीति मनोहारि ॥ ४ ॥

( वाच्य० )···युक्ताः···चारचक्षुष···वञ्चयेयुः प्रभून् अनुजीविनः । अर्ह्यते (त्वया) हितेन मनोहारिणा दुर्लभेन (भूयते) वचसा ॥४॥

( सरलार्थः ) यतश्चरा एव राज्ञां चक्षुस्वरूपाः, अतश्चरैः मिथ्यावचनै राजानो न प्रतारणीयाः । तस्मादहं सर्वं सत्यमेव ते कथयामि । तथाकथनेन यदि मेऽपराधो भविष्यति, स त्वया क्षन्तव्यः ॥४॥

(हिन्दी) दूत ही राजा के नेत्र हैं, इस कारण उन्हें मिथ्या बोलकर राजा को धोखा न देना चाहिये इसलिये मैं सर्वथा सत्य बोलूंगा । यदि अप्रिय भाषण से मैं अपराधी समझा जाऊं तो आपको क्षमा करनी होगी ॥४॥

तर्हि तूष्णींभाव एव वरमित्याशङ्क्याह—

स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः ।

सदा
~~सदा~~नुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसंपदः ॥५॥

( अन्वयः ) यः अधिपं, साधु न शास्ति सः, किंसखा । यः, हितात्, हितं न संशृणुते, सः, किंप्रभुः । हि, नृपेषु, च, अमात्येषु, च, अनुकूलेषु, ( सत्सु ) सर्वसम्पदः, सदा रतिं कुर्वते ॥५॥

स इति । यः अमात्यादिरधिपं स्वामिनं साधु हितं न शास्ति नोपदिशति । अनुशिष्टि—'इत्यादिना शासेर्दुहादिपाठाद् द्विकर्मकत्वम् । स हितानुपदेष्टा । कुत्सितः सखा किंसखा । दुर्मन्त्रीत्यर्थः । 'किमः क्षेपे' इति समासान्तप्रतिषेधः । तथा यः प्रभुर्निग्रहानुग्रहसमर्थः स्वामी, हितादाप्तजनाद्धितोपदेष्टुः सकाशात् । 'आख्यातोपयोगे' इत्यपादानत्वात्पञ्चमी । न संशृणुते न शृणोति । हितमिति शेषः 'समो गम्यृच्छि—,इत्यादिना सम्पूर्वाच्छृणोतेरकर्मकादात्मनेपदम् । अकर्मकत्वं वैवक्षिकम् । सर्वथा सचिवेन वक्तव्यं श्रोतव्यं स्वामिना । एवं च राजमन्त्रिणोरैकमत्यं स्यादित्यर्थः । ऐकमत्यस्य फलमाह—सदेति । हि यस्मान्नृपेषु स्वामिषु । अमा सह भवा अमात्यास्तेषु च । 'अव्ययात्त्यप्' । अनुकूलेषु परस्परानुरक्तेषु सत्सु सर्वसम्पदः सदा रतिमनुरागं कुर्वते कुर्वन्ति । न जातु जहतीत्यर्थः । अतो मया वक्तव्यं त्वया च श्रोतव्यमिति भावः ॥ अत्रैव राजमन्त्रिणोर्हितानुपदेशतदश्रवणनिन्दासामर्थ्यसिद्धेरैकमत्यलक्षणकारणस्य निर्दिष्टस्य सर्वसंपत्सिद्धिरूपकार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । यदुक्तम्—'सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यास इति ॥५॥

( सुबो० ) यः ( सखा अमात्यादिः) अधिपं ( प्रभुं राजानं ) साधु (हितं) न शास्ति ( न उपदिशति ) सः किंसखा ( कुत्सितः सखा, दुर्मन्त्रीत्यर्थः ) यः ( प्रभुः ) हितात् ( हितवादिनः अमात्यात् ) न संशृणुते ( हितवचनं न शृणोति ) सः किंप्रभुः ( कुत्सितः स्वामी ) हि ( यतः ) नृपेषु ( राजसु ) अमात्येष ( मन्त्रिषु ) च अनुकूलेषु ( परस्परानुरक्तेषु

सत्सु ) सर्वसम्पदः ( सर्वाः सम्पत्तयः ) सदा ( सर्वदा ) रतिम् (अनुरा-गं )कुर्वते ( कुर्वन्ति ) ॥५॥

( वाच्य० ) तेन किंसख्या भूयते । "शिष्यते येन अधिपः ।" येन न संश्रूयते तेन किं प्रभुणा भूयते ।···क्रियते रतिः···सर्व-सम्पद्भिः ॥ ५ ॥

( सरलार्थः ) यो मन्त्री राजानं हितं नोपदिशति स दुर्मन्त्री । यश्च राजा मन्त्रिणो हितवचनं न शृणोति स कुराजः । राजानो मन्त्रिणश्च यदि परस्परमनुरक्ताः भवेयुः, तदा राज्यसम्पत् चिरं तिष्ठेत् । अतो मया हित-वचनं वक्तव्यम्, त्वयापि प्रसन्नमनसा तत् श्रोतव्यमिति ॥ ५ ॥

( हिन्दी ) जो मंत्री राजा को हित का उपदेश नही करता वह योग्य मंत्री नहीं है और जो राजा मंत्री द्वारा कहे गये हित वचनों को नहीं सुनता वह अयोग्य राजा है । इसलिये जब राजा और मंत्री मे परस्पर मेल रहता है तभी राज्यलक्ष्मी बहुत काल तक स्थिर होकर रहती है ॥ २ ॥

सम्प्रति स्वाहंकारं परिहरति—

निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनां चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥६॥

( अन्वयः ) निसर्गदुर्बोधं भूपतीनां चरितं क्व, अबोधविक्लवाः, जन्तवः, क्व । निगूढतत्त्वं, विद्विषां, नयवर्त्म, यत् मया, अवेदि अयं, तव, अनुभावः ॥ ६ ॥

निसर्गेति—निसर्गदुर्बोधं स्वभावदुर्ग्रहम् । 'ईषद्दुः' इत्यादिना खल्प्रत्ययः । भूपतीनां चरितं क्व । अबोधविक्लवा अज्ञानोपहता जन्तवः । मादृशाः पामरजना इत्यर्थः । क्व । नोभयं संघटत इत्यर्थः । तथापि निगूढतत्त्वं संवृतयाथार्थ्यं विद्विषां नयवर्त्म षाड्गुण्यप्रयोगः 'संधिविग्रह-

यानानि संस्थाप्यासनमेव च । द्वैधीभावश्च विज्ञेयाः षड्गुणा नीतिवेदिनाम् ।' इत्यादिरूपो यन्मयाऽवेदि । ज्ञातमिति यावत् । विदेः कर्मणि लुङ् । अयम् इदं वेदनमित्यर्थः । विधेयप्राधान्यात्पुंलिङ्गनिर्देशः । तवानुभाव: सामर्थ्यम् । अनुगतो भावोऽनुभाव इति घञन्तेन प्रादिसमासः । न तूपसृष्टाद्धञ्प्रत्ययः । अतः 'श्रिणीभुवोऽनुपसर्गे' इत्यनुपसर्गाद्भवतेर्घञ्विधानात् । अत एव काशिकायाम् 'कथं प्रभावो राज्ञां प्रकृष्टो भाव इति प्रादिसमासः' इति । दोषपरिहारौ सम्यग्ज्ञात्वैव विज्ञापयामि । ननु वृथा कर्णकठोरं प्रलपामीत्याशयः ॥ ६ ॥

(सुबो०) निसर्गदुर्बोधं (निसर्गेण स्वभावेन, दुर्बोधं बोद्धुमशक्यं) भूपतीनां (राज्ञां) चरितं ( कार्य्यं ) क्व ( कुत्र ) ( अस्ति ) अबोधविक्लवाः (अज्ञानोपहताः) जन्तवः ( मादृशाः पामरजनाश्च ) क्व ( कुत्र ) सन्ति, स्वभावदुर्बोधं राजचरितम् अज्ञजनैर्ज्ञातुं न शक्यते इति भावः) (तथापि) निगूढतत्त्वं ( संवृतयाथार्थ्यं ) विद्विषां ( भवतः, शत्रूणां राज्ञां ) नयवर्त्म ( नीतिमार्गः, सन्धिविग्रहयानादिषड्गुणप्रयोगः ) यत् मया अवेदि ( ज्ञातम् ) अयम् ( इदं वेदनं ) तव अनुभावः ( प्रभावः, तवैव प्रभावेण अज्ञानेनापि मया सर्वं विद्विचरितं ज्ञातमित्यर्थः ) ॥ ६ ॥

( समासः ) अनुभावः = अनु गतो भावः इति प्रादिसमासः । अबोधेन विक्लवाः ( कातराः ) अबोधविक्लवाः । निगूढं तत्त्वं यस्य तत् । नयस्य वर्त्म नयवर्त्म ॥ ६ ॥

( वाच्यपरिवर्तनम् ) निसर्गदुर्बोधेन···चरितेन···भूयते । अबोधविक्लवैः···जन्तुभिः भूयते ।···अनुभावेन अनेन भूयते । अवेदिषं·· अहं ॥ ६ ॥

( सरलार्थः ) यद्यपि मादृशैरज्ञजनैः कुटिला राजनीतिः ज्ञातुमशक्या, तथापि तव प्रभावेणैव मया सा ज्ञाता ॥ ६ ॥

( हिन्दी ) यद्यपि मेरे सदृश अबोध जन राजाओं की कुटि-

लनीति को नहीं समझ सकते तथापि मैंने आपकी कृपा से इस के गूढ़ तत्व को जाना है ॥ ६ ॥

सम्प्रति यद् वक्तव्यं तदाह—

विशङ्कमानो भवतः पराभवं नृपासनस्थोऽपि वनाधिवासिनः ।
दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधनः ॥ ७ ॥

( अन्वयः ) सुयोधनः, नृपासनस्थः ( सन् ) अपि, वनाधिवासिनः, भवतः, पराभवं, विशङ्कमानः, दुरोदरच्छद्मजितां, जगतीं, नयेन, जेतुं, समीहते ॥ ७ ॥

विशङ्कमान इति । सुखेन युध्यते सुयोधनः । भाषायां शासियुधिदृशधृषिमृषिभ्यो युज्वाच्यः । नृपासनस्थः सिंहासनस्थोऽपि । वनमधिवसतीति वनाधिवासिनो वनस्थात् राज्यभ्रष्टादपीत्यर्थः । भवतस्त्वत्तः पराभवं पराजयं विशङ्कमान उत्प्रेक्षमाणः सन् । दुष्टमुदरमस्येति दुरोदरं द्यूतम् । पृषोदरादित्वात्साधुः । 'दुरोदरे द्यूतकारे पणे द्यूते दुरोदरम्' इत्यमरः । तस्य च्छद्मना मिषेण जितां लब्धां दुर्नयार्जितां जगतीं महीम् । 'जगती विष्टपे मह्यां वास्तुच्छन्दोविशेषयोः' इति वैजयन्ती । नयेन नीत्या जेतुं वशीकर्तुं समीहते व्याप्रियते । न तूदास्त इत्यर्थः । वलवत्स्वामिकमविशुद्धागमं च धनं भुञ्जानस्य कुतो मनसः समाधिरिति भावः । अत्र 'दुरोदरच्छद्मजिताम्' इति विशेषणद्वारेण पदार्थस्य चतुर्थपादार्थं प्रति हेतुत्वेनोपन्यासाद् द्वितीयकाव्यलिङ्गमलङ्कारः । तदुक्तम्—हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' ॥ ७ ॥

( सुबो० ) सुयोधनः ( दुर्य्योधनः ) नृपासनस्थः ( राजासनमधिष्ठितः सन् ) अपि वनाधिवासिनः ( वनस्थात्, राज्यच्युतात् इत्यर्थः ) भवतः ( त्वत्तः ) पराभवं ( पराजयं ) विशङ्कमानः ( समयम् उत्प्रेक्षमाणः ) दुरोदरच्छद्मजितां ( दुरोदरस्य द्यूतस्य छद्मना छलेन जितां लब्धां ) जगतीं ( महीं ) नयेन ( नीत्या ) जेतुं ( वशीकर्तुं ) समीहते ( चेष्टते ) ॥७॥

(समासः) सुयोधनः=सुखेन युध्यतेऽसौ सुयोधनः—युध = कर्म्मणि खलर्थे युच् ( अन ), सुयोधन इति दुर्य्योधनस्य नामान्तरम्। नृपस्य आसनमिति नृपासनं, तत्र तिष्ठतीति नृपासनस्थः। दुष्टमुदरं यस्य तद् दुरोदरं, तस्य छद्म दुरोदरच्छद्म तेन जिता ताम् ॥ ७ ॥

( वाच्यपरिवर्तनम् ) विशङ्कमानेन ··· नृपासनस्थेन ··· समीहते ··· सुयोधनेन ॥७॥

( सरलार्थः ) दुर्य्योधनो नृपासनमधिकुर्वन् वनवासिनोऽपि महाविक्रमशालिनो भवतः पराजयमाशङ्कमानः द्यूतक्रीड़या छलेन जितामपि महीम् प्रकृतीनामनुरञ्जनेन चिरं वशीकर्त्तुं नीतिशास्त्रानुसारिणीं वृत्तिमवलम्बते ॥ ७ ॥

(हिन्दी) राज्यासन पर बैठा हुआ भी दुर्योधन वनस्थित आप से सर्वदा शंकित रहता है। अतः छल से जीते हुए राज्य को वह अब नीति से अपने वश में करना चाहता है ॥ ७ ॥

नयेन जगतीजयस्य प्रकारमाह—

तथापि जिह्मः स भवज्जिगीषया तनोति शुभ्रं गुणसंपदा यशः।
समुन्नयन्भूतिमनार्यसंगमाद् वरं विरोधोऽपि समं महात्मभिः ॥८॥

( अन्वयः ) तथापि, जिह्मः, सः, भवज्जिगीषया, गुणसम्पदा, शुभ्रं, यशः, तनोति। भूतिं, समुन्नयन् महात्मभिः, समं विरोधः, अपि अनार्यसङ्गमात्, वरम् ॥८॥

तथापीति। तथापि साशङ्कोऽपि। जिह्मो वक्रः। वञ्चक इति यावत्। स दुर्य्योधनो भवज्जिगीषया। गुणैर्भवन्तमाक्रमितुमिच्छयेत्यर्थः। 'हेतौ' इति तृतीया। गुणसम्पदा दयादानदाक्षिण्यादिगुणगरिम्णा करणेन शुभ्रं यशस्तनोति। स खलो गुणलोभनीयां त्वत्संपदमात्मसात्कर्तुं त्वत्तोऽपि गुणवत्तामात्मनः प्रकटयतीत्यर्थः। नन्वेवं गुणिनः सतोऽपि

सज्जनविरोधो महानस्त्यत्य दोष इत्याशङ्क्य सोऽपि सत्संसर्गलाभो नीचसंगमाद्वरमुत्कर्षावहत्वादित्याह—समिति तथाहि । भूतिं समुन्नयन्नुत्कर्षमापादयन् 'लटः शतृशानचौ'—इत्यादिना शतृप्रत्ययः, पुनर्लङ्ग्रहणसामर्थ्यात्प्रथमासामानाधिकरण्यम् । महात्मभिः समम् 'सह' इत्यर्थः । 'साकं सत्रा समं सह' इत्यमरः । अनार्यसङ्गमाद् दुर्जनसंसर्गात् । पञ्चमी विभक्तेः, इति पञ्चमी । विरोधोऽपि । वरं मनाक्प्रियः । 'देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक्प्रिये' इत्यमरः । अत्र मैत्र्यपेक्षया मनाक्प्रियत्वं विरोधस्य । 'भूतिं समुन्नयन्' इत्यस्य पूर्ववाक्यान्वये समाप्तस्य वाक्यार्थस्य पुनरादानात्समाप्तपुनरात्ताख्या न दोषापत्तिः । तदुक्तं काव्यप्रकाशे—समाप्तपुनरादानात्समाप्तपुनरात्तकम् । इति, न च वाक्यान्तरमेतत् । येनोक्तदोषपरिहारः स्यात् । अर्थान्तरन्यासालङ्कारः । स च भूतिसमुन्नयनस्य पदार्थविशेषणद्वारा विरोधवत्वं प्रति हेतुत्वाभिधानरूपकाव्यलिङ्गानुप्राणित इति ॥८॥

( सुबो० ) तथापि ( तथाच ) जिह्मः ( कुटिलः ) सः ( दुर्योधनः ) भवज्जिगीषया ( भवन्तं जेतुमिच्छया हेतुना ) गुणसम्पदा ( दयादानदाक्षिण्यादिगुणोत्कर्षेण ) शुभ्रं ( निर्म्मलं ) यशः ( कीर्त्ति ) तनोति ( विस्तारयति ) । ( तथाहि ) भूतिम् ( सम्पदं ) समुन्नयन् ( उत्कर्षम् आपादयन् ) महात्मभिः समं ( साधुभिः सह ) विरोधः ( शत्रुता ) अपि, अनार्य्यसङ्गमात् ( असाधुभिः सह मैत्र्याः ) वरं ( मनाक्प्रियः ) ॥ ८ ॥

( समासः ) भवज्जिगीषया = जेतुमिच्छा जिगीषा भवतो जिगीषा भवज्जिगीषा तया । गुणानां सम्पत् गुणसम्पत् तया । अनार्य्यसङ्गमात् = न आर्य्याः अनार्य्याः तैः सङ्गमः तस्मात् ॥ ८ ॥

( वाच्यपरिवर्तनम् ) जिह्मेन तेन...तन्यते...। समुन्नयता वरेण भूयते विरोधेन ... ॥ ८ ॥

( सरलार्थः ) स भवतोऽप्यधिकतरगुणशालितया आत्मानं ख्यापयितु-

मिच्छन् सर्वैः सह सद्व्यवहारैः विमलं यशो विस्तारयति । अतो मन्ये असाधुभिः सह मैत्रीकरणात् साधुभिः सह शत्रुताकरणं वरम्, येन आत्मोत्कर्षः साध्यते ॥ ८ ॥

( हिन्दी ) अपने यश को विशेषरूप से फैलाने की इच्छा करने वाला दुर्योधन शंकायुक्त रहने पर भी अपने अच्छे व्यवहार से निर्मल यश को फैला रहा है । क्योंकि नीचों के साथ मित्रता करने की अपेक्षा सज्जनों के साथ विरोध करना कहीं अच्छा है ॥ ८ ॥

तस्य पौरुषं नीतियुक्तमित्याह—

कृतारिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तन्दिवमस्ततन्द्रिणा वितन्यते तेन नयेन पौरुषम् ॥९

( अन्वयः ) कृतारिषड्वर्गजयेन, अगम्यरूपां, मानवीं, पदवीं, प्रपित्सुना, अस्ततन्द्रिणा तेन नक्तन्दिवं, विभज्य, नयेन पौरुषं, वितन्यते ॥ ९ ॥

कृतेति । षण्णां वर्गः षड्वर्गः अरीणामन्तःशत्रूणां कामक्रोधादीनां षड्वर्गोऽरिषड्वर्गः । शिवभागवतवत्समासः । तस्य जयः कृतो येन तेन तथोक्तेन । विनीतेनेत्यर्थः । विनीताधिकारं प्रजापालनमिति भावः । अगम्यरूपां पुरुषमात्रदुष्प्राप्याम् । मनोरिमां मानवीम् । मनूपदिष्टसदाचारक्षुण्णामित्यर्थः । पदवीं प्रजापालनपद्धतिं प्रपित्सुना प्रतिपत्तुमिच्छुना । प्रपद्यतेः सन्नन्तादुप्रत्ययः 'सनि मीमा' इत्यादिनेसादेशः । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । अस्ता तन्द्रिरालस्यं यस्य तेनास्ततन्द्रिणा । अनलसेनेत्यर्थः । तदिः सौत्रो धातुः । तस्मात् 'वङ्क्र्यादयश्च' इत्यौणादिकः क्रिन्प्रत्ययः कृदिकारादक्तिनो वा ङीष् वक्तव्य इति । 'तन्द्रावटीतरीतन्द्रीति ङीषन्तोऽपि' इति क्षीरस्वामी । तथा रामायणे प्रयोगः—'निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित्' इति । तेन दुर्योधनेन । पुरुषस्य कर्म पौरुषं पुरुषकारः । उद्योग इति यावत् । युवादित्वादण् प्रत्ययः 'पौरुषं

पुरुषस्योक्ते भावे कर्मणि तेजसि' इति विश्वः । नक्तञ्च दिवा च नक्तन्दिवम् । अहोरात्रयोरित्यर्थः । 'अचतुर'—इत्यादिना सप्तम्यर्थवृत्त्योरन्ययोर्द्वन्द्वनिपातेऽच्समासान्तः । विभज्यास्यां वेलायामिदं कार्य्यमकार्य्यमिति विभागं कृत्वा नयेन नीत्या वितन्यते विस्तार्यते ॥ ९ ॥

( सुबोधिनी ) कृतारिषड्वर्गजयेन ( जितकामक्रोधादिषड्रिपुणा ) अगम्यरूपां (साधारणपुरुषैः दुर्बोधां) मानवीं ( मनूपदिष्टां ) पदवीं( राज्यपालनपद्धतिं ) प्रपित्सुना ( अवलम्बितुमिच्छुना ) तेन ( दुर्य्योधनेन ) अस्ततन्द्रिणा ( अनलसेन सता ) नक्तन्दिवं ( रात्रौ च दिने च ) विभज्य ( अस्यां वेलायामिदं कर्म्म कर्त्तव्यमिति विभमगं कृत्वा) नयेन ( नीत्या, नीतिशास्त्रानुसारेण ) पौरुषं ( पुरुषकर्म्म ) वितन्यते ( विस्तार्य्यते, क्रियते इत्यर्थः ) ॥ ९ ॥

( समासः ) कृतारिषड्वर्गजयेन = षण्णां वर्गः षड्वर्गः, अरीणां षड्वर्गः अरिषड्वर्गं इति शिवभागवतवत्समासः, अथवा अरिश्चासौ षड्वर्गश्चेति अरिषड्वर्गं इति कर्म्मधारयः—कृतः अरिषड्वर्गस्य जयो येन सः । यानासनाद्यादिषड्वर्गनिरासनाय अरिरिति विशेषणम्, मानवीम्-मनोरिमां मानवीम् । अगम्यरूपाम् = अगम्यं रूपं स्वभावः यस्याः सा ताम् । अस्ततन्द्रिणा = अस्ता तन्द्रिः येन तेन ॥ ९ ॥

( वाच्यपरिवर्तनम् ) कृतारिषड्वर्गजयः···प्रपित्सुः···अस्ततन्द्रिः वितनोति सः···पौरुषम् ॥ ९ ॥

( सरलार्थः ) स दुर्योधनः कामक्रोधादिकं विजित्य अनलसः सन् अहोरात्रयोर्मध्ये अस्यां वेलायामिदं कर्त्तव्यमिति कार्य्याणां विभागं कृत्वा मानवनीतिमनुसृत्य सर्वाणि कर्म्माणि करोति ॥ ९ ॥

( हिन्दी ) काम क्रोधादि शत्रुओं को जीत कर आलस्य रहित हो दुर्योधन रात और दिन के कार्यों के करने के समय का

विभाग कर नियमित रूप से ठीक समय पर नीति के अनुसार कार्य करता है ॥ ६ ॥

सम्प्रति तस्य भृत्याद्यनुरागमाह—

सखीनिव प्रीतियुजोऽनुजीविनः समानमानान्सुहृदश्च बन्धुभिः ।
स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुताम् ॥१०॥

( अन्वयः ) गतस्मयः, सः, सन्ततम्, साधु, अनुजीविनः, प्रीतियुजः, सखीन्, इव, सुहृदः, चः, बन्धुभिः, समानमानान्, बन्धुतां, कृताधिपत्याम्, इव, दर्शयते ॥ १० ॥

सखीनिति । गतस्मयो निरहङ्कारोऽत एव स दुर्योधनः सन्ततमनारतं साधु सम्यक् । अकपटमित्यर्थः । अनुजीविनो भृत्यान् । प्रीतियुजः स्निग्धान्सखीनिव मित्राणीव । दर्शयते । लोकस्येति शेषः 'हेतुमति च' इति णिच् 'णिचश्च' इत्यात्मनेपदम् शोभनं हृदयं येषां तान् सुहृदो मित्राणि च । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातः । बन्धुभिर्भ्रात्रादिभिः समानमानांस्तुल्यसत्कारान् दर्शयते । बन्धूनां समूहो बन्धुता ताम् । 'ग्रामजनबन्धुसहायेभ्यस्तल्' । कृतमाधिपत्यं स्वाम्यं यस्यास्तां कृताधिपत्यामिव दर्शयते । बन्धूनधिपतीनिव दर्शयतीत्यर्थः । यथा भृत्यादिषु सख्यादिबुद्धिर्जायते लोकस्य तथा तान्सम्भावयतीत्यर्थः । अनुजीव्यादीनाम् 'कर्तुरीप्सिततमं कर्म' इति कर्मत्वम् । पूर्वं त्वस्मिन्नेव पदान्वये वाक्यार्थमित्थं वर्णयन्ति, स राजाऽनुजीव्यादीन् सख्यादीनिव दर्शयते । सख्यादय इव ते तु तं पश्यन्ति । सख्यादिभावेन पश्यतस्तांस्तथा दर्शयते । स्वयमेव च्छन्दानुवर्तितया स्वदर्शनं तेभ्यः प्रयच्छतीत्यर्थः । अर्थात्तस्येप्सितकर्मत्वम् । अणिकर्तुरनुजीव्यादेः 'अभिवादिदृशोरात्मनेपदानुपसंख्यानम्' इति पाक्षिकं कर्मत्वम्, एवं चात्राण्यन्तकर्मणो राज्ञोऽण्यन्ते कर्तृत्वेऽपि 'आरोहयते हस्ती स्वयमेव' इत्यादिवदश्रूयमाणकर्मान्तरभावान्नायं णेरणादिसूत्रस्य विषय इति मत्वा 'णिचश्च' इत्यात्मनेपदं प्रतिपेदिरे । भाष्ये तु णेरणादिसूत्रविषयत्वमप्यस्योक्तम् ।

यथाह—"पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान् राजा' अत्रात्मनेपदं सिद्धं भवति" इति। अत्राह कैयटः—'ननु कर्मान्तरसद्भावादत्रात्मनेपदं न भाव्यम्। उच्यते—अस्मादेवोदाहरणाद्भाष्यकारस्यायमेवाभिप्राय ऊह्यते। अण्यन्तावस्थायां ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावादात्मनेपदं न भवति, यथा—'स्थलमारोहयति मनुष्यान्' इति। इह त्वण्यन्तावस्थायां कर्तृणां भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदमिति ॥१०॥

(सुबो०) गतस्मयः ( निरहङ्कारः ) सः (दुर्योधनः ) सन्ततं (सर्वदा) साधु (अकपटम् ) अनुजीविनः 'भृत्यान् ) प्रीतियुजः (प्रणयभाजनानि ) सखीन् ( मित्राणि ) इव, सुहृदः (मित्राणि) च बन्धुभिः (भ्रात्रादिभिः) समानमानान् ( तुल्यसत्कारान् ) बन्धुतां ( बन्धुसमूहं ) कृताधिपत्यां ( वस्तुतोऽधिपतिम् ) इव, दर्शयते ( लोकस्येति शेषः ) ॥१०॥

( समासः ) गतस्मयः= गतः स्मयो यस्य सः । अनुजीविनः = अनु =पश्चाज्जीवन्ति तेऽनुजीविनः। प्रीतियुजः =प्रीत्या युञ्जन्ति ते प्रीतियुजः। शोभनं हृदयं येषामिति सुहृदः। समानमानान् = समानः मानः येषां तान्। बन्धूनां समूहो बन्धुता, ताम्। कृताधिपत्यां ( मया ) कृतं आधिपत्यं अधिपतिकर्म यस्यास्ताम् ॥१०॥

( वाच्यपरिवर्तनम् ) सखायः...समानमानाः......तेन... दृश्यन्ते गतस्मयेन कृताधिपत्या...बन्धुता ॥१०॥

( सरलार्थः ) दुर्योधनः सर्वेषामनुरागसञ्चयार्थं सर्वथा निरभिमानः अकपटश्च सन् भृत्यैः सह मित्रवद् व्यवहरति मित्राणि सोदरादीनिव सम्माद्रियते, सोदरादींश्चैवं ज्ञापयति यद् राज्येऽस्मिन् वस्तुतो भवतामेवाधिपत्यं, भवत्प्रतिनिधिना च सता मया राजकार्यं क्रियत इति ॥१०॥

(हिन्दी) सभों का अनुरागी बनने के लिए अभिमान रहित दुर्योधन अपने नौकरों से मित्रता का भाव रखता है, मित्रा से

सहोदरों के समान व्यवहार करता है और सगे सम्बन्धियों को यह कहता है कि यह राज्य वस्तुतः आप ही का है आप के प्रतिनिधि स्वरूप मैं इसकी देखभाल करता हूं ॥१०॥

न चायं त्रिवर्गात् प्रमाद्यतीत्याह—

असक्तमाराधयतो यथायथं विभज्य भक्त्या समपक्षपातया,
गुणानुरागादिव सख्यमीयिवान् न बाधतेऽस्य त्रिगणः परस्परम् ॥

(अन्वयः) यथायथं, विभज्य, समपक्षपातया, भक्त्या, असक्तम्, आराधयतः, अस्य, त्रिगणः, गुणानुरागात्, सख्यम्, ईयिवान्, इव परस्परं, न, बाधते ॥११॥

असक्तमिति ॥ यथायथं यथास्वं विभज्य । असङ्कीर्णरूपं विविच्येत्यर्थः । 'यथायथ' इति निपातनाद् द्विर्भावो नपुंसकत्वं च 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम् । पक्षे पातः पक्षपात आसक्तिविशेषः समस्तुल्यो यस्यां सा तया समपक्षपातया । भक्त्याऽनुरागविशेषेण । पूज्येष्वनुरागो भक्तिरित्युपदेशः । पूज्यश्चायं त्रिवर्ग इति । असक्तमनासक्तम् । अव्यसनितयेति यावत् । आराधयतः सेवमानस्यास्य दुर्योधनस्य त्रयाणां धर्मार्थकामानां गणस्त्रिगणस्त्रिवर्गः 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः । गुणवदाश्रयलोभादित्यर्थः । सख्यं मैत्रीम् 'सख्युर्यः' इति यप्रत्ययः । ईयिवानुपगतवानिवेत्युत्प्रेक्षा । 'उपेयिवाननाश्वाननूचानश्च' इति क्वसुप्रत्ययान्तो निपातः । नात्रोपसर्गस्तन्त्रम्, इति काशिकाकार आहस्म । परस्परं न बाधते । समवर्तित्वादस्य धर्मार्थकामा परस्परानुपमर्देन वर्धन्त इत्यर्थः । उक्तञ्च "धर्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्यः" इति ॥ ११ ॥

( सुबो० ) यथायथं ( यथात्वं, यथाभागं ) विभज्य ( विविच्य, धर्म्मार्थकामरूपः त्रिवर्गः मिश्रीकृत्य सेव्य इत्यर्थः; इयता कालेन धर्म्मः सेव्यः, इयता कालेनार्थः, इयता कालेन कामश्चेति सर्वेषां समय विभागं कृत्वा )

समपक्षपातया ( समः समानः पक्षपातः आसक्तिविशेष यस्यां तथाभूतया ) भक्त्या (अनुरागेण प्रत्येकं प्रति तुल्यसमादरेण) असक्तम् (अनासक्तं यथा स्यात् तथा ) आराधयतः ( सेवमानस्य ) अस्य ( दुर्योधनस्य ) त्रिगणः ( त्रयाणां धर्मार्थकामानां गणः ) गुणानुरागात् ( तदीयगुणपक्षपातितया ) सख्यं (मैत्रीम्—धर्मं सेवमानस्य अर्थे कामे च आसक्तिर्न जायते, अर्थं सेवमानस्य न धर्म्मे न कामे, कामं ( भोगं ) सेवमानस्य न धर्म्मे न चार्थे इतीत्थं परस्परं शत्रुतामापद्यमानोऽपि मित्रत्वम् ) ईयिवान् ( प्राप्तवान् ) इव, परस्परं ( अन्योऽन्यं ) न बाधते न पीडयति—परस्पराविमर्देन वर्द्धत इत्यर्थः ) ॥ ११ ॥

( समासः ) गुणानुरागात्=अनुरज्यत इति अनुरागः, गुणेषु अनुरागस्तस्मात् ॥ ११ ॥

(वाच्यपरिवर्तनम्) ' ईयुषा ' ' बाध्यते ' ' त्रिगणेन परस्परः ॥११॥

(सरलार्थः) स दुर्योधनः अनासक्तः सन्नपि अवश्यकर्तव्यतया धर्म्ममर्थं कामं च कालविभागेन व्यवस्थाप्य सादरं सेवतेऽतोऽस्य त्रिवर्गोऽपि परस्परानुपमर्देन सततं वर्द्धत एव ॥ ११ ॥

( हिन्दी ) दुर्योधन अनासक्त हो, आवश्यक कर्तव्य जान कर, बनाये हुए समयविभाग के अनुसार धर्म, अर्थ और काम की सेवा करता है इस तरह उसका त्रिवर्ग भी निरन्तर वृद्धि प्राप्त कर रहा है ॥ ११ ॥

अथ तस्य सामदानकौशलं दर्शयति—

निरत्ययं साम न दानवर्जितं न भूरि दानं विरहय्य सत्क्रियाम् ।
प्रवर्तते तस्य विशेषशालिनी गुणानुरोधेन विना न सत्क्रिया॥१२॥

( अन्वयः ) तस्य, निरत्ययं, साम, दानवर्जितं, न, भूरिदानं, सत्क्रियां, विरहय्य, न, विशेषशालिनी, सत्क्रिया, गुणानुरोधेन, विना, न प्रवर्तते ॥ १२ ॥

निरत्ययमिति । तस्य दुर्योधनस्य निरत्ययं निर्बाधम् । अमायिकमित्यर्थः । अन्यथा जनानां दुर्ग्रहत्वादिति भावः । साम सान्त्वम् । 'साम सान्त्वम् । 'साम सान्त्वमुभे समे' इत्यमरः । दानवर्जितं न प्रवर्तते । अन्यथा लुब्धाद्यावर्जनस्य शुष्कप्रियैर्वाक्यैर्दुष्करत्वादिति भावः । उक्तञ्च—'लुब्धमर्थेन गृह्णीयात्साधुमञ्जलिकर्मणा मूर्खं छन्दानुरोधेन तत्वार्थेन च पण्डितम् । इति, तथा भूरि प्रभूतम् । न तु कदाचित्स्वल्पमित्यर्थः, दानं धनत्यागः । सदित्यादरार्थेऽव्ययम् । 'आदरानादरयोः सदसती' इति निपातसंज्ञास्मरणात् । तस्य क्रियां सत्क्रियां विरहय्य विहाय । 'ल्यपि लघुपूर्वात्' इत्ययादेशः न प्रवर्तते । अनादरे दानवैफल्यादिति भावः । न चैवं सर्वत्र, येनाविवेकित्वं कोशहानिश्च स्यादित्याह—प्रेति । विशेषशालिन्यतिशययोगिनी सत्क्रिया दानक्रिया गुणानुरोधेन गुणानुरागेण विना न प्रवर्तते । पृथग्विना—' इत्यादिना तृतीया । गुणेष्वेवादरो भूरि दानं चेति नोक्तदोषावकाश इत्यर्थः । अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषणतया स्थापनादेकावल्यलङ्कारः । तदुक्तं काव्यप्रकाशे—'स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम् । विशेषणतया वस्तु यत्र सैकावली द्विधा' ॥ १२ ॥

(सुबो०) तस्य ( दुर्य्योधनस्य ) निरत्ययं ( निर्बाधम्, अविच्छेद्यं ) साम (सन्धिः) दानवर्जितं ( दानरहितं सत् ) न प्रवर्तते ( न भवति—स येन सह सन्धिं करोति तस्मै धनमपि ददातीत्यर्थः ) भूरि ( प्रचुरं ) दानं, सत्क्रियां विरहय्य (समादरं परित्यज्य). न प्रवर्तते प्रचुरमपि धनं समादरपूर्वकमेवासौ ददाति इत्यर्थः ) विशेषशालिनी ( विशिष्टा ) सत्क्रिया (समादरः) गुणानुरोधेन (गुणानुसारेण) विना, न प्रवर्त्तते ( गुणवत्स्वेव तस्य समादरपूर्वकं प्रभूतदानं दृश्यत इत्यर्थः) ॥१२॥

(समासः) निरत्ययं = नास्ति अत्ययः नाशः यस्य तत् । सत् आदरः तस्य क्रिया ताम् । विशेषशालिनी = विशेषेण सह शालते शोभत इति ॥

(वाच्यपरिवर्तनम्) निरत्ययेन साम्ना ... दानवर्जितेन ... भूरिणा दानेन ... प्रवृत्यते ... विशेषशालिन्या ... सत्क्रियया॥१२॥

( सरलार्थः ) साम दानं भेदो दण्डश्चतुर्षु उपायेषु असौ विविच्य येन सह सन्धिं करोति तस्मै धनमपि ददाति । स यदि गुणवान् भवति तदा सत्कारपूर्वकं प्रभूतं धनं ददाति ॥१२॥

(हिन्दी) दुर्योधन, विचार करके साम, दान, भेद और दण्ड इन चार उपायों में से जिसके साथ संधि करता है उसको धन भी देता है। वह यदि गुणी हो तो आदर पूर्वक विशेष धन देता है ॥ १२ ॥

दण्डप्रकारमाह—

वसूनि वाञ्छन्न वशी न मन्युना स्वधर्म इत्येव निवृत्तकारणः ।
गुरूपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम् १३

(अन्वयः) वशी, सः, न, वसूनि, वाञ्छन्, न, मन्युना, निवृत्तकारणः ( सन् ) स्वधर्मः, इति, एव, गुरूपदिष्टेन, रिपौ, सुते, अपि, वा, धर्म्मविप्लवं, निहन्ति ॥१३॥

वसूनीति । वशी दुर्योधनो वसूनि धनानि वाञ्छन्न । लोभान्नेत्यर्थः । 'वसु तोये धने मणौ' इति वैजयन्ती । निहन्तीति शेषः । तथा मन्युना कोपेन न च । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । 'धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः' इति स्मरणादित्यर्थः । किन्तु निवृत्तकारणः निवृत्त-लोभादिनिमित्तः सन्स्वधर्म इत्येव । स्वस्य राज्ञः सतो ममायं धर्मो ममेदं कर्तव्यमित्यस्मादेव हेतोरित्यर्थः । 'अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवा-प्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति ।' इति स्मरणा-दितिभावः । गुरूपदिष्टेन प्राड्विवाकोपदिष्टेन । 'धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः । समाहितमतिः पश्येद् व्यवहाराननुक्रमात् ।' इति नारदस्मरणात् । दण्डेन दमेन । शिक्षयेत्यर्थः । रिपौ सुतेऽपि वा । स्थितमिति शेषः । एतेनास्य समदर्शित्वमुक्तम् । धर्मविप्लवं धर्मव्यतिक्रमम्

अधर्ममिति यावत् । निहन्ति निवारयति । दुष्ट एवास्य शत्रुः शिष्ट एव बन्धुः । न तु सम्बन्धनिबन्धनः पक्षपातोऽस्तीत्यर्थः ॥१३॥

(सुबो०) वशी (जितेन्द्रियः) सः (दुर्य्योधनः) न, वसूनि (धनानि) वाञ्छन् (इच्छन्, न दण्डलभ्यधनलोभेन इत्यर्थः) न मन्युना (न क्रोधेन) "अपि तु" निवृत्तकारणः (स्नेहमात्सर्यादिहेतुहीनः सन्) स्वधर्मः (स्वस्य राज्ञो मम धर्म्म एवायम्) इत्येव (एतावन्मात्रं बुद्ध्वा) गुरूपदिष्टेन (गुरुणा प्राड्विवाकेन निर्दिष्टेन) दण्डेन (दमेन) रिपौ सतेऽपि वा (शत्रौ वा पुत्रे वा) धर्म्मविप्लवं (धर्म्मव्यतिक्रमम्, अधर्म्माचरणं) निहन्ति (निवारयति) ॥१३॥

(समासः) निवृत्तकारणः = निवृत्तं कारणं यस्य सः । धर्मविप्लवं = धर्मस्य विप्लवो धर्मविप्लवस्तम् ॥१३॥

(वाच्यपरिवर्तनम्) ··वाञ्छता ··वशिना ··निवृत्तकारणेन ··निहन्यते ··तेन धर्म्मविप्लवः ॥१३॥

(सरलार्थः) स दुर्य्योधनः लोभक्रोधस्नेहमात्सर्य्यादीनि परित्यज्य प्रधानामात्येन सह मन्त्रयित्वा यथाऽपराधं शत्रुं पुत्रं च यथाशास्त्रं दण्डयति ॥१३॥

(हिन्दी) लोभ, क्रोध, स्नेह, मात्सर्य आदि का परित्याग कर दुर्योधन प्रधान मंत्री से सम्मति लेकर अपराध के अनुसार पुत्र किंवा शत्रु को पक्षपात रहित होकर शास्त्रोक्त दण्ड देता है ॥१३॥

सम्प्रति अधिकृतेषु पुरुषेषु सद्व्यवहारं दर्शयन्नाह—

विधाय रक्षान्परितः परेतरानशङ्किताकारमुपैति शङ्कितः ।
क्रियापवर्गेष्वनुजीविसात्कृताः कृतज्ञतामस्य वदन्ति सम्पदः ॥१४

(अन्वयः) (सः परितः, परेतरान्, रक्षान्, विधाय, शङ्कितः, (सन् अपि) अशङ्किताकारम् उपैति । क्रियापवर्गेषु, अनुजीविसात्कृताः, सम्पदः, अस्य, कृतज्ञतां, वदन्ति ॥१४॥

विधायेति । शङ्का सञ्जाताऽस्य शङ्कितोऽविश्वस्तः सन्परितः सर्वत्र स्वपरगण्डले परेतरानात्मीयान् । अवञ्चकानिति यावत् यद्वा परानितरयन्ति भेदेनात्मसात्कुर्वन्तीति परेतरान् । तत्करोतीति ण्यन्तात्कर्मण्यण्प्रत्ययः । रक्षन्तीति रक्षान् रक्षकान् । मन्त्रगुप्तिसमर्थानित्यर्थः । नन्दिग्रह इत्यादिना-पचाद्यच् । विधाय कृत्वा । नियुज्येत्यर्थः । अशङ्किताकारमुपैति । स्वयमविश्वस्तोऽपि विश्वस्तवदेव व्यवहरन्परमुखेनैव परान्भिनत्तीत्यर्थः । न च तान् रक्षानुपेक्षते येन तेऽपि विकुर्वीरन्नित्याह- क्रियेति । क्रियापवर्गेषु कर्मसमाप्तिष्वनुजीविसात्कृता भृत्याधीनाः कृताः । अपरावर्तितया दत्ता इत्यर्थः । "देये त्रा च" इति साति प्रत्ययः । सम्पदोऽस्य कृतज्ञतामुपकारित्वं वदन्ति । प्रीतिदानैरेवास्य कृतज्ञत्वं प्रकाश्यते, न तु वाङ्मात्रेणेत्यर्थः । कृतज्ञराजन्यनुजीविनोऽनुरज्यन्तेऽनुरक्ताश्च ते रक्षन्तीति भावः॥१४

(सुबोधिनी) (सः) परितः (सर्वतः) परेतरान् (आत्मीयान् जनान्) रक्षान् (रक्षकान्) विधाय ( कृत्वा, नियुज्य ) शङ्कितः ( तेषु अविश्वस्तः सन्नपि ) अशङ्किताकारं ( विश्वस्तवन्मुखभावादिकम् इङ्गितम् ) उपैति प्रा(प्नोति, प्रकाशयतीत्यर्थः) क्रियापवर्गेषु (युद्धादिकर्म्मणाम् अवसानेषु जयादिफलप्राप्तिषु च) अनुजीविसात्कृताः (भृत्याधानाः कृताः तत्तत्कर्म्माधिकृतेभ्यो भृत्येभ्यो दत्ताः) सम्पदः (जयादिलब्धाः पुरस्काररूपा वा द्रव्यादिसम्पत्तयः) अस्य (दुर्य्योधनस्य) कृतज्ञतां ( मर्य्यादाभिज्ञतां ) वदन्ति (सूचयन्ति) ॥१४॥

(समासः) रक्षान्=रक्षन्तीति तान् । परेतरान्=परेभ्य इतरे परेतराः, तान् । अशङ्किताकारम्=शङ्का जाता अस्येति शङ्कितः, न शङ्कित इत्यशङ्कितः तस्य आकारः तम् ॥१४॥

( वाच्य० ) . . . अशङ्किताकारः उपेयते शङ्कितेन । . . . अनुजीविसात्कृताभिः कृतज्ञता . . . उद्यते सम्पद्भिः ॥१४॥

(सरलार्थः) स दुर्य्योधनः आत्मीयान् जनान् राज्यरक्षाकर्म्मणि

नियुज्य तेषु सम्पूर्णं विश्वासमकृत्वा सुगुप्तं तेषां कार्य्याणि पर्य्यालोचयन्नपि बाह्याकारैः विश्वासं प्रदर्शयति। कार्य्यावसाने जयलब्धद्रव्यजातैः पुरस्कारप्रदानेन वा तेषु कृतज्ञतां च प्रकाशयति ॥१४॥

(हिन्दी) राज्य की रक्षा के लिये दुर्योधन आत्मीय जनों को नियुक्त कर गुप्त रूप से उनके कार्यों को देखा करता है परन्तु प्रत्यक्ष रूप से पूरा विश्वास दिखाता है। कार्य के समाप्त हो जाने पर दुर्योधन द्वारा दिये गये द्रव्यादि पुरस्कार ही उसकी कृतज्ञता को प्रगट करते हैं ॥ १४ ॥

अथोपायप्रयोगस्य फलवत्तां दर्शयति—

अनारतं तेन पदेषु लम्भिता विभज्य सम्यग्विनियोगसत्क्रियाः।
फलन्त्युपायाः परिबृंहितायतीरुपेत्य सङ्घर्षमिवार्थसम्पदः ॥ १५ ॥

(अन्वयः) तेन, पदेषु, विभज्य, लम्भिताः, सम्यग्विनियोगसत्क्रियाः उपायाः, सङ्घर्षम्, उपेत्य, इव, परिबृंहितायतीः, अर्थसम्पदः अनारतं, फलन्ति ॥ १५ ॥

अनारतमिति। तेन राज्ञा पदेषूपादेयवस्तुषु, 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। सम्यगसंकीर्णमव्यस्तं च विभज्य विविच्य। विनियोग एव सत्क्रियाऽनुग्रहः। सत्कार इति यावत्। यासां ता लम्भिताः। स्थानेषु सम्यक्प्रयुक्ता इत्यर्थः। उपायाः सामादयः। सङ्घर्षं परस्परस्पर्धामुपेत्येवेत्युत्प्रेक्षा। परिबृंहितायतीः प्रचितोत्तरकालाः स्थिरा इत्यर्थः। अर्थसम्पद अनारतमजस्रं फलन्ति। प्रसुवत इत्यर्थः ॥१५॥

(सुबोधिनी) तेन (दुर्य्योधनेन) पदेषु; (स्थानेषु, योग्यपात्रेषु) विभज्य (विविच्य) लम्भिताः (पदं प्रापिताः, प्रयुक्ताः) सम्यग्विनियोगसत्क्रियाः (सम्यक् यथाशास्त्रं विनियोगः प्रयोग एव सत्क्रिया सत्कारः येषां तथाविधाः) उपायाः (सामदानभेददण्डाख्याः) सङ्घर्षं (परस्परस्पर्द्धाम्)

उपेत्य ( प्राप्य इव ) परिबृंहितायतीः ( उपचितोत्तरकालाः, चिरस्थिरा इत्यर्थः) अर्थसम्पदः धनसम्पत्तीः) अनारतं (सततं) फलन्ति (प्रसुवते) ।

(समासः) विनियोगसत्क्रियाः = विनियोग एव सत्क्रिया येषां ते । परिबृंहितायतीः = परिबृंहिता उपचिता आयतिः उत्तरकालो यासां ताः, अर्थसम्पदः = अर्था एव सम्पदः ताः ॥ १५ ॥

(वाच्यपरिवर्तनम्)···लम्भितैः ··· सम्यग्विनियोगसत्क्रियैः फल्यन्ते उपायैः परिबृंहितायतयः···अर्थसम्पदः ॥ १५ ॥

(सरलार्थः) समानैः सह सन्धिः कर्त्तव्यः, बलवत्तरेभ्यो दानं कर्त्तव्यम्, संहताः शत्रवो भेत्तव्याः, हीनबलैः सह विग्रहः कार्य्य इति नीतिशास्त्रानुसारेण विविच्य विहितैः सामाद्युपायैः हेतुभिः सः अनपायनीः अर्थसम्पत्तीः लभते ॥ १५ ॥

(हिन्दी) साम, दान, दण्ड और भेद इन चार उपायों द्वारा नीतिशास्त्र के नियमानुसार अच्छी तरह विचार कर वह स्थायी अर्थसम्पत्ति को प्राप्त कर रहा है ॥ १५ ॥

अर्थसम्पत्प्रकारमाह—

अनेकराजन्यरथाश्वसंकुलं तदीयमास्थाननिकेतनाजिरम् ।
नयत्ययुग्मच्छदगन्धिरार्द्रतां भृशं नृपोपायनदन्तिनां मदः ॥१६

( अन्वयः ) अयुग्मच्छदगन्धिः, नृपोपायनदन्तिनां, मदः, अनेकराजन्यरथाश्वसंकुलं, तदीयम् आस्थाननिकेतनाजिरं, भृशम्, आर्द्रतां नयति ।

अनेकेति ॥ अयुग्मच्छदस्य सप्तपर्णपुष्पस्य गन्ध इव गन्धो यस्यासावयुग्मच्छदगन्धिः । 'सप्तम्युपमान—' इत्यादिना बहुव्रीहिरुत्तरपदलोपश्च । उपमानाच्च' इति समासान्त इकारः । नृपाणामुपायनान्युपहारभूता ये दन्तिनस्तेषां मदः । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । राज्ञा-

मपत्यानि पुमांसो राजन्याः क्षत्रियाः । 'राजश्वशुराद्यत्' इति यत्प्रत्ययः राज्ञोऽपत्ये जातिग्रहणादण् रथाश्चाश्वाश्च रथाश्वम् । सेनाङ्गत्वादेकवद्भावः । अनेकेषां राजन्यानां रथाश्वेन संकुले व्याप्तं तदीयमास्थाननिकेतनाजिरं सभामण्डपाङ्गणं "अङ्गणं चत्वराजिरे" इत्यमरः । भृशमत्यर्थमार्द्रतां पङ्किलत्वं नयति एतेन महासमृद्धिरस्योक्ता । अत एवोदात्तालङ्कारः । तथा चालङ्कारसूत्रम्—'समृद्धिमद्वस्तुवर्णनमुदात्तः' इति ॥ १६ ॥

( सुबोधिनी ) अयुग्मच्छदगन्धिः ( सप्तपर्णकुसुमगन्धिः ) नृपोपायनदन्तिनां ( नृपाणां राज्ञाम् उपायनानि उपहारभूताः, ये दन्तिनः गजाः तेषां मदः ( दानजलम् ) अनेकराजन्यरथाश्वसंकुलम् ( अनेके बहवो राजन्याः क्षत्रियाः तेषां रथाश्वेन रथैरश्वैश्च संकुलं व्याप्तं ) तदीयं ( तस्य दुर्य्योधनस्य सम्बन्धि ) आस्थाननिकेतनाजिरं ( सभामण्डपप्राङ्गणं ) भृशम् ( अत्यन्तम् ) आर्द्रतां (पङ्किलतां) नयति (प्रापयति) ॥१६॥

(समासः) अयुग्मच्छदस्य गन्ध इव गन्धो यस्य सः । रथाश्च अश्वाश्च तेषां समाहारः रथाश्वम्, अनेकेषां राजन्यानां रथाश्वेन सङ्कुलमिति अनेकराजन्यरथाश्वसंकुलम् ॥ १६ ॥

(वाच्य०)···नीयते···मदेन ॥ १६ ॥

( सरलार्थः ) प्रत्यहं बहवो राजानो बहून् मदमत्तान् गजान् तस्मै उपहरन्ति, येषां मदजलेन तस्य सभागृहाङ्गणमार्द्रतामापद्यते ॥ १६ ॥

(हिन्दी) राजागण नित्य ही उसे उपहार स्वरूप अनेक मत्त हाथी लाकर दिया करते हैं, जिनके कपोल के जल से उसके महल का आंगन गीला रहता है ॥ १६ ॥

सम्प्रति ज पदक्षेमकरत्वमाह—

सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसंपदः ।
वितन्वति क्षेममदेवमातृकाश्चिराय तस्मिन्कुरवश्चकासते ॥१७॥

(अन्वयः) तस्मिन्, क्षेमं, वितन्वति ( सति ) अदेवमातृकाः, कुरवः, कृषीवलैः, सुखेन, लभ्याः, अकृष्टपच्याः, इव, सस्यसम्पदः, दधतः, चिराय, चकासते ॥ १७ ॥

सुखेनेति । चिराय तस्मिन्दुर्योधने क्षेमं वितन्वति क्षेमंकरे सति । देवः पर्जन्य एव माता येषां ते देवमातृका वृष्ट्यम्बुजीविनो देशाः । ते न भवन्तीत्यदेवमातृकाः । नदीमातृका इत्यर्थः । देशो नद्यम्बुवृष्ट्यम्बु-संपन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥' इत्यमरः । एतेनास्य कुल्यादिपूर्तप्रवर्तकत्वमुक्तम् । कुरूणां निवासाः कुरवो जनपद-विशेषाः । कृष्टेन पच्यन्त इति कृष्टपच्याः । 'राजसूय—' इत्यादिना कर्मकर्तरि क्यप्प्रत्ययान्तो निपातः । तद्विपरीता अकृष्टपच्या इव । कृषि-र्येषामस्तीति कृषीवलैः । कर्षकैरित्यर्थः । 'रजः कृषि—' आदिना वलच् प्रत्ययः । 'वले' इति दीर्घः । सुखेनाक्लेशेन लभ्या लब्धुं शक्याः सस्य-संपदो दधतो धारयन्तः 'नाभ्यस्ताच्छतुः इति नुमागमप्रतिषेधः । चकासते । सर्वोत्कर्षेण वर्तन्त इत्यर्थः । अदभ्यस्तात्' इति झेरदादेशः । 'जक्षित्या-दयः षट्' इत्यभ्यस्तसंज्ञा । संपन्नजनपदत्वादसन्तापकरत्वाच्च दुःसाध्योऽय-मिति भावः ॥ १७ ॥

( सुबोधिनी ) तस्मिन् (दुर्य्योधने) क्षेमं (कूपकुल्यादिपूर्तकर्म्मवि-धानरूपं शुभं) वितन्वति ( कुर्वति सति ) अदेवमातृकाः (वृष्टिजलनिर-पेक्षाः ) कुरवः ( कुरुदेशाः ) कृशीवलैः ( कृषकैः ) सुखेन ( अक्लेशेन ) लभ्याः ( अत एव ) अकृष्टपच्याः इव ( कर्षणं विनैव फलवतीरिव ) सस्यसंपदः ( सस्यसमृद्धीः ) दधतः ( धारयन्तः सन्तः ) चिराय ( चिरं कालं व्याप्य, सर्वदैव ) चकासते ( शोभन्ते ) ॥१७॥

(समासः) कृषीवलैः=कृषिरेषामस्तीति तैः । लब्धुं शक्याः, लभ्या, अकृष्टपच्याः=कृष्टे स्वयमेव पच्यन्त इति कृष्टपच्या न कृष्टपच्या अकृष्ट-पच्याः । सस्यसम्पदः=सस्यस्य सम्पत् ताः । देवो माता मातृवत् पोष-यिता येषां ते देवमातृकाः तथा न भवन्तीत्यदेवमातृकाः ॥ १७ ॥

(वाच्यपरिवर्तनम्) दयद्भिः अदेवमातृकैः कुरुभिः कार्यते ॥१७॥

( सरलार्थः ) नदीप्रवाहवर्द्धनकूपकुल्यादिपूर्तकर्मविधानद्वारा तस्य राज्यं सदैव शस्यसमृद्धिसम्पन्नं सत् विराजते ॥ १७ ॥

(हिन्दी) नदी, नहर, कुएँ, तालाब, बावली आदि की सहायता राज्य की ओर से होने के कारण इसका देश धन धान्य से सम्पन्न हो गया है जिससे प्रजा बड़े आनन्द में हैं ॥ १७ ॥

प्रजासुखसाधनार्थमेवं प्रभूतव्ययं कुर्वतोऽपि तस्य प्रभून् आयोऽस्तीत्याह–

उदारकीर्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया ।
स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी॥१८॥

(अन्वयः) उदारकीर्तेः, दयावतः, अभिरक्षया, प्रशान्तबाधम्, उदयम्, दिशतः, वसूपमानस्य, अस्य, गुणैः, उपस्नुता, मेदिनी, वसूनि, स्वयं, प्रदुग्धे ॥१८॥

उदारेति । उदारकीर्तेर्महायशसः । 'उदारो दातृमहतोः' इत्यमरः । दयावतः परदुःखप्रहरणेच्छोः । अत एव प्रशमितोपद्रवं यथा स्यात्तथेति क्रियाविशेषणम् । उदयविशेषणं वा । 'वा दान्तशान्त'—इत्यादिना शमिधातोर्ण्यन्तान्निष्ठान्तो निपातः । अभिरक्षया सर्वतस्त्राणेनोदयं वृद्धिं दिशतः संपादयतो वसूपमानस्य कुबेरोपमस्य । 'वसुर्मयूखाग्निधनाधिपेषु' इति विश्वः । अस्य दुर्योधनस्य गुणैर्दयादाक्षिण्यादिभिरुपस्नुता द्राविता मेदिनी वसूनि धनानि । 'वसु तोये धने मणौ' इति वैजयन्ती । स्वयं प्रदुग्धे । अक्लेशेन दुह्यत इत्यर्थः । दुहेः कर्मकर्तरि लट् । 'न दुहस्नुनमां यक्चिणौ' इति यक्प्रतिषेधः । यथा केनचिद्विदग्धेन नवप्रसूता रक्षिता गौः स्वयं प्रदुग्धे तद्वदिति भावः । अलंकारस्तु 'विशेषणमात्रसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः' इति सर्वस्वकारः । अत्र प्रतीयमानया गवा सह प्रकृताया मेदिन्या भेदेऽभेदलक्षणातिशयोक्तिवशाद्दोह्यत्वेनोक्तिरिति संक्षेपः ॥

( सुबोधिनी ) उदारकीर्तेः (महायशसः) दयावतः ( परदुःखापहरणेच्छोः ) अभिरक्षया (सर्वतो रक्षणेन हेतुना) प्रशान्तबाधम् (उपद्रवशून्यम्) उदयम् । (उन्नतिं) दिशतः (सम्पादयतः) वसूपमानस्य (धार्मिकतया उपरिचरवसुसदृशस्य) अस्य (दुर्योधनस्य) गुणैः (दयादाक्षिण्यादिभिर्हेतुभिः) उपस्नुता ( क्षारिता, द्रावितेत्यर्थः,) मेदिनी ( पृथिवी ) वसूनि ( धनानि ) स्वयम् (आत्मना) प्रदुग्धे (प्रपूरयति) ॥ १८ ॥

(समासः) उदारकीर्तेः=उदारा कीर्तिर्यस्य तस्य उदारकीर्तेः । प्रशान्तबाधं=प्रशान्ता बाधा यस्य तं । अभिरक्षया=अभितः रक्षा तया । वसूपमानस्य=वसुः उपमानं यस्य सः तस्य ॥ १८ ॥

(वाच्यपरिवर्तनम्)···प्र दुह्यते···उपस्नुतया मेदिन्या ॥१८॥

( सरलार्थः ) प्रजारक्षणपरायणतया पूर्तकर्म्मादिभिः राज्यस्योन्नतिं विदधते तस्मै राज्यस्थाः प्रजाः स्वेच्छया अतिरिक्तमपि करं ददति ॥१८॥

(हिन्दी) प्रजा की रक्षा में तत्पर रहने वाले दुर्योधन का राज्य दिनों दिन उन्नति कर रहा है। अतः राज्यस्थित व्यापारी अपनी इच्छा ही से उसे अतिरिक्त कर भी दिया करते हैं ॥१८॥

वीरभटानुकूल्यमाह—

महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः ।
न संहतास्तस्य न भिन्नवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुम्॥

(अन्वयः) महौजसः, मानधनाः, धनार्चिताः, संयति, लब्धकीर्त्तयः, धनुर्भृतः, न संहताः न भिन्नवृत्तयः, (सन्तः) असुभिः, तस्य, प्रियाणि, समीहितुं, वाञ्छन्ति ॥१६॥

महौजस इति । महौजसो महाबलाः । अन्यथा दुर्बलानामनुपकारित्वादिति भावः । मानः कुलशीलाद्यभिमान एव धनं येषां ते मानधनाः, अन्यथा कदाचिद् बलदर्पाद्विकुर्वीरन्निति भावः । धनार्चिता धनैरर्चिताः

सत्कृताः। अन्यथा दारिद्र्यादेनं जह्युरिति भावः। संयति संग्रामे लब्धकीर्तयः। बहुयशस इत्यर्थः। अन्यथा कदाचिन्मुह्येयुरिति भावः। संहताः मिथः संगताः स्वार्थनिष्ठा न भवन्तीति न संहताः नञर्थस्य न शब्दस्य सुप्सुपेति समासः। भिन्नवृत्तयो मिथो विरोधात्स्वामिकार्यकरा न भवन्तीति नभिन्नवृत्तयः। पूर्ववत्समासः। अन्यथा स्वामिकार्यविघातकतया स्वामिद्रोहिणः स्युरित्युभयत्रापि तात्पर्यार्थः। धनुर्भृतो धानुष्काः। आयुधीयमात्रोपलक्षणमेतत्। प्राधान्याद्धनुर्ग्रहणम्। यस्य दुर्योधनस्यासुभिः प्राणैः प्रियाणि समीहितुं वाञ्छन्ति। आनृण्यार्थं प्राणान्दातुमिच्छन्ति। अन्यथा दोषस्मरणादिति भावः। अत्र महौजसादिपदार्थानां प्राणदानकर्तव्यतां प्रति विशेषणगत्या हेतुत्वाभिधानात्काव्यलिङ्गमलङ्कारः। लक्षणं तूक्तम्। तथा साभिप्रायविशेषणत्वात्परिकरालङ्कार इति द्वयोस्तिलतण्डुलवद्विभक्ततया स्फुरणात्संसृष्टिः॥ १९॥

(सुबोधिनी) महौजसः (महाबलाः) मानधनाः (प्रियसत्काराः) धनार्चिताः (अन्तरा अन्तरा दुर्योधनेन धनेन सम्मानिताः) संयति (युद्धे) लब्धकीर्तयः (अर्जितयशसः) धनुर्भृतः (योद्धारः) नसंहताः (कदाचित् पृथग्भूता अपि) न भिन्नवृत्तयः (प्रभुकार्य्यसाधनार्थम् एकमतावलम्बिनः सन्तः) असुभिः (स्वकीयैप्राणैः, प्राणपणेन) तस्य (दुर्योधनस्य) प्रियाणि (हितानि) समीहितुं (साधयितुं) वाञ्छन्ति (इच्छन्ति)॥ १९॥

(समासः) महौजसः=महत् ओजो येषान्ते महौजसः। मानधनाः=मान एव सम्मान एव धनं येषां ते। धनुर्भृतः=धनूंषि बिभ्रतीति धनुर्भृतः। धनार्चिताः=धनैरर्चिताः। लब्धा कीर्तिर्यैस्ते। नभिन्नवृत्तयः=न भिन्ना वृत्तिर्येषान्ते॥१६॥

[वाच्यपरिवर्तनम्] महौजोभिः धनार्चितैः धनुर्भृद्भिः...लब्धकीर्तिभिः न संहतैः...न भिन्नवृत्तिभिः...वाञ्छन्ते॥ १६॥

[ सरलार्थः ] तस्य महाबलशालिनोऽनेकयुद्धविजयिनो योद्धारो धनमानैरर्चिताः सन्तः परस्परमेकमतावलम्बिनो भूत्वा प्राणपणेनास्य हितानि कुर्वन्ति ॥ १९ ॥

[ हिन्दी ] महाबली, अनेक युद्ध में विजय पाये हुए, धनी, यशस्वी योद्धागण सर्वदा एक मत होकर प्राण पणसे उसका हित करते हैं ॥ १६ ॥

परराष्ट्रवृत्तान्तं स वेत्ति, तद्राष्ट्रवृत्तान्तं तु अन्ये न विदुरित्याह—

महीभृतां सच्चरितैश्चरैः क्रियाः स वेद निःशेषमशेषितक्रियः ।
महोदयैस्तस्य हितानुबन्धिभिः प्रतीयते धातुरिवेहितं फलैः ॥२०॥

[ अन्वयः ] अशेषितक्रियः, सः, सच्चरितैः, चरैः, महीभृतां, क्रियाः, निःशेषं, वेद। धातुः, इव, तस्य, ईहितं, महोदयैः, हितानुबन्धिभिः, फलैः, प्रतीयते ॥ २० ॥

महीभृतामिति । अशेषितक्रियः । समापितकृत्यः । आफलोदयकर्मेत्यर्थः । स दुर्योधनः सच्चरितैः शुद्धचरितैः । चरन्तीति चरास्तैश्चरैः प्रणिधिभिः । पचाद्यच् । महीभृतां क्रियाः प्रारम्भान्निःशेषं वेद वेत्ति । 'विदो लटो वा' इति णलादेशः । स्वरहस्यं तु न कश्चिद्वेदेत्याह—महोदयैरिति । धातुरिव तस्य दुर्योधनस्येहितमुद्योगो महोदयैर्महावृद्धिभिः । हितमनुबध्नन्त्यनुरुन्धन्तीति हितानुबन्धिभिः, स्वन्तैरित्यर्थः । फलैः कार्यसिद्धिभिः प्रतीयते ज्ञायते । फलानुमेयास्तस्य प्रारम्भा इत्यर्थः ॥ २० ॥

( सुबोधिनी ) अशेषित क्रियः ( अशेषिता समापिताः क्रियाः स्वराष्ट्ररक्षणकृत्यानि येन तथाभूतः ) सः (दुर्योधनः ) सच्चरितैः ( सद्वृत्तैः) चरैः (प्रणिधिभिः) महीभृताम् ( अन्येषां राज्ञां ) क्रियाः ( आरम्भान् ) निःशेषं ( सम्पूर्णं ) वेद ( जानाति ) धातुः ( स्रष्टुः ) इव, तस्य (दुर्योधनस्य ) ईहितं ( चेष्टितम्, उद्योगः ) महोदयैः ( सातिशयवृद्धिमद्भिः ) हितानुबन्धिभिः ( स्वराष्ट्रहितकरैः ) फलैः, प्रतीयते ( अन्यैर्ज्ञायते ) ॥२०॥

(वाच्यपरिवर्तनम्)...क्रियाः तेन विद्यन्ते...अशेषितक्रियेण। ...प्रतियन्ति (अन्ये)... ईहितं ...॥२०॥

(समासः) अशेषिता क्रिया येन सः। चरन्तीति चरास्तैश्चरैः। महीभृतां=महीं बिभ्रतीति महीभृतस्तेषां। महोदयैः=महान् उदयो येषां ते तैः। हितानुबन्धिभिः=हितमनुबध्नन्तीति तैः ॥ २० ॥

(सरलार्थः) सः स्वराष्ट्ररक्षां सर्वतो विधाय गुप्तचरैः परेषां राज्ञां क्रिया-कलापं जानाति। यथा विधातृचेष्टितं, फलं दृष्ट्वा सर्वे जानन्ति न तु तत्-पूर्वम्, तथा तस्य चेष्टितानि फलानि दृष्ट्वा अन्ये जानन्ति न तु तत्पूर्वं। यथा रघुवंशे— "तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च। फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव" इति ॥ २० ॥

(हिन्दी) वह अपने राष्ट्र की पूर्णरूप से रक्षा कर दूतों द्वारा शत्रुओं के राज्यों का समाचार लिया करता है। जैसे ब्रह्मदेव के कार्य उसके फल को देख कर ही जाने जाते हैं, उसी तरह इसके कार्य भी सिद्ध होने पर ही जाने जाते हैं ॥ २० ॥

मित्रबलमाह—

न तेन सज्यं क्वचिदुद्यतं धनुः कृतं न वा कोपविजिह्ममाननम्।
गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम् ॥२१॥

(अन्वयः) तेन, क्वचित्, सज्यं, धनुः, न, उद्यतम्। आननं, वा, कोपविजिह्मं, न, कृतम्। गुणानुरागेण, नराधिपैः, अस्य, शासनं, माल्यम्, इव, शिरोभिः, उह्यते ॥ २० ॥

नेति ॥ तेन राज्ञा क्वचित्कुत्रापि। सह ज्यया मौर्व्या सज्यम्। 'मौर्वी ज्याशिञ्जिनी गुणः' इत्यमरः, तेन सहेति तुल्ययोगे, इति बहु-व्रीहिः। धनुर्नोद्यतं नोर्ध्वीकृतम्। आननं वा कोपविजिह्मं कोपकुटिलं न कृतम्। यस्य कोप एव नोदेति कुतस्तस्य युद्धप्रसक्तिरिति भावः। कथं

तदाज्ञां कारयति राज इत्यत्राह—गुणेति । गुणेषु दयादाक्षिण्येष्वनुरागेण प्रेम्णा । माल्यपक्षे सूत्रानुषङ्गेण । यद्वा सौरभ्यगुणलोभेन । नराधिपैरस्य शासनमाज्ञाम् । मालैव माल्यं तदिव । 'चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्' इति क्षीरस्वामी । शिरोभिरुह्यते । धार्यते । 'वचिस्वपियजादीनां किति' इति यकि संप्रसारणम् । अत्रोपमा स्फुटैव ॥ २१ ॥

( सुबोधिनी ) तेन ( दुर्य्योधनेन ) कचित् ( कुत्रापि ) सज्यं ( मौवीसहितं ) धनुः, न उद्यतं ( न उन्नमितम् । आननं (मुख) वा, कोपविजिह्मं ( क्रोधकुटिलं ) न कृतम् । ( तथापि ) गुणानुरागेण ( दयादाक्षिण्यादि-गुणपक्षपातितया, माल्यपक्षे-सौरभ्यगुणलो ) भेन नराधिपैः ( राजभिः ) अस्य ( दुर्य्योधनस्य ) शासनम् (आज्ञां) माल्यम् इव, शिरोभिः ( मस्तकैः) उह्यते ( धार्य्यते ) ॥ २१ ॥

( समासः ) सज्यं=ज्यया सह वर्तमानम् । कोपविजिह्म=कोपेन विजिह्मम् । गुणानुरागेण=अनुरज्यंत = इत्यनुरागः गुणेषु अनुरागः तेन । नराधिपैः=अधि=पान्ति रक्षन्तीत्यधिपाः, नराणामधिपास्तैः ॥ २ ॥

(वाच्यपरिवर्तनम्)...स...उद्यतवान्. . .कृतवान्. . .।. . . वहन्ति नराधिपाः. . .॥ २१ ॥

( सरलार्थः ) स युद्धार्थमुद्यतो न भवति, न वा क्रोधं प्रकाशयति, तथापि सर्वे राजानः गुणानुरक्ता एव अवनतमस्तकाः सन्तः तस्याज्ञाम् पालयन्ति ॥ २१ ॥

(हिन्दी) राजा दुर्योधन ने न कभी धनुष उठाया और न कभी किसी पर क्रोध ही किया फिर भी केवल इसके गुणों पर मुग्ध हुए सभी माण्डलिक राजे माथा नवाँ कर पुष्पहार की तरह सदा इसकी आज्ञा धारण किया करते हैं ॥ २१ ॥

संप्रति तस्य धार्मिकत्वमाह—

स यौवराज्ये नवयौवनोद्धतं निधाय दुःशासनमिद्धशासनः ।
मखेष्वखिन्नोऽनुमतः पुरोधसा धिनोति हव्येन हिरण्यरेतसम् ॥

(अन्वयः) इद्धशासनः, सः, नवयौवनोद्धतं, दुःशासनं, यौवराज्ये निधाय, पुरोधसा, अनुमतः, अखिन्नः, (सन्) मखेषु, हव्येन, हिरण्यरेतसं, धिनोति ॥ २२ ॥

(मल्लिनाथः) स इति। इद्धशासनोऽप्रतिहताज्ञः स दुर्योधनो नवयौवनेनोद्धतं प्रगल्भम्। धुरन्धरमित्यर्थः। दुःखेन शास्यत इति दुःशासनस्तम्। 'भाषायां शासियुधि'—इत्यादिना खलर्थे युच्प्रत्ययः। यौवराज्ये युवराजकर्म्मणि। ब्राह्मणादित्वाष्यन्। निधाय। नियुज्येत्यर्थः। पुरोधसा पुरोहितेनानुमतोऽनुज्ञातः। तस्मिन्याजके सतीत्यर्थः। तदुल्लङ्घने दोषस्मरणादिति भावः। 'निष्ठा' इति भूतार्थे क्तः। न तु 'मतिबुद्धि'—इत्यादिना वर्तमानार्थे। अन्यथा 'पुरोधसा' इत्यत्र 'क्तस्य च वर्तमाने' इति षष्ठी स्यात्। अखिन्नोऽनलसो मखेषु क्रतुषु हव्येन हविषा। हिरण्यं रेतो यस्य तं हिरण्यरेतसमनलं धिनोति प्रीणयति। धिन्वेः प्रीणनार्थात् 'धिन्विकृण्व्योर च' इत्युप्रत्ययः। अकारश्चान्तादेशः ॥२२॥

(सुबो०) इद्धशासनः (अव्याहताज्ञः) सः (दुर्योधनः) नवयौवनोद्धतं (नवेन यौवनेन उद्धतं प्रगल्भं, राज्यभारवहनक्षममित्यर्थः) दुःशासनं (तन्नामानं द्वितीयंसहोदरं) यौवराज्ये (युवराजकर्म्मणि) निधाय (नियोज्य) पुरोधसा (पुरोहितेन) अनुमतः (आदिष्टः) अखिन्नः (अनलसः सन्) मखेषु (यज्ञेषु) हव्येन (हविषा) हिरण्यरेतसम् (अग्निं) धिनोति (प्रीणयति) ॥२२॥

(समासः) इद्धशासनः = इद्धं दीप्तं शासनं यस्य सः। नवयौवनोद्धतम् = नवं च तत् यौवनं नवयौवनं, तेन उद्धतस्तम्। दुःशासनम् = दुःखेन शास्यत इति दुःशासनः तम्। यौवराज्ये = युवराजस्य भावः कर्म वा यौवराज्यं तस्मिन्। हिरण्यरेतसम् = हिरण्यं रेतो यस्य सः तम्। पुरोधसा = पुरो धीयत इति पुरोधाः, तेन ॥२२॥

[वाच्यपरिवर्तनम्] तेन...इद्धशासनेन...अखिन्नेन अनुमतेन धिन्व्यते...हिरण्यरेताः ॥२२॥

( सरलार्थः ) सः स्वकौशलेन राज्यं स्थिरतरं कृत्वा देवताप्रसादेन स्थिरतमं कर्तुं दुःशासनं यौवराज्ये अभिषिच्य इदानीं पुरोहितेन सहितः सर्वदा विविधान् यज्ञान् अनुतिष्ठति ॥ २२ ॥

( हिन्दी ) उसने अपने एक भाई दुःशासन को युवराज बनाकर उसपर राज्य का भार दे दिया और स्वयं देवताओं को प्रसन्न करने के लिये पुरोहित से आज्ञा लेकर यज्ञ करने लगा ॥ २२ ॥

न चैतावता भवता निरुत्साहेन भाव्यमित्याशां प्रदर्शयति—

प्रलीनभूपालमपि स्थिरायति प्रशासदावारिधि मण्डलं भुवः ।
स चिन्तयत्येव भियस्त्वदेष्यतीरहो दुरन्ता बलवद्विरोधिता ॥

( अन्वयः ) सः, प्रलीनभूपालं, स्थिरायति, आवारिधि, भुवः मण्डलं, प्रशासत् अपि, त्वत् एष्यतीः भियः चिन्तयति एव । अहो बलवद्विरोधिता दुरन्ता ॥ २३ ॥

( मल्लिनाथः ) प्रलीनेति । स दुर्योधनः प्रलीनभूपालम् । निःसपत्नमित्यर्थः । स्थिरायति । चिरस्थायीत्यर्थः । भुवो मण्डलमावारिधिभ्य आवारिधि । 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावः । प्रशासदाज्ञापयदपि । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा । 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । त्वत्त एष्यतीरागमिष्यतीः । धातूनामनेकार्थत्वादुक्तार्थसिद्धिः । अथवाङ्पूर्वः पाठः । 'एत्येधत्यूठसु' इति वृद्धिः । 'लृटः सद्वा' इति शतृप्रत्ययः 'उगितश्च' इति ङीप् । 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः । भियो भयहेतून् । विपद इत्यर्थः । चिन्तयत्यालोचयत्येव । स एवाह— अहो बलवद्विरोधिता दुरन्ता दुष्टावसाना । सार्वभौमस्यापि प्रबलैः सह वैरायमाणत्वमनर्थपर्यवसाय्येवेति तात्पर्यम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २३ ॥

( सुबो० ) सः ( दुर्योधनः ) प्रलीनभूपालं ( निष्कण्टकं ) स्थिरायति ( चिरस्थायि ) आवारिधि ( आसमुद्रं, ससागरं ) भुवो मण्डलं

( पृथिवीमण्डलं ) प्रशासत् ( प्रकर्षेण आज्ञाधीनं कुर्वन् ) अपि, त्वत् ( भवत्सकाशात् ) एष्यतीः (प्राप्स्यतीः, उपस्थास्यतीः) भियः ( पराभव-भीतीः ) चिन्तयति एव ( सततं चिन्तयन् वर्तते ) अहो बलवद्विरोधिता ( बलवता प्रबलेन सह विरोधः ) दुरन्ता ( दुष्परिणामा, मन्दफला-भवति ) ॥ २३ ॥

( समासः ) प्रलीनभूपालम्=प्रलीनाः स्वमुद्विग्नता भूपाला यस्मिन् तत् । स्थिरायति=स्थिरा आयतिः उत्तरकालो यस्य तत् । आवारिधि=आ वारिधिभ्य इत्यावारिधि ॥ २३ ॥

( वाच्यपरिवर्तनम् ) ... प्रशासता ... तेन चिन्त्यन्ते ... एष्य-त्यः । ... दुरन्तया बलवद्विरोधितया भूयते ॥ २३ ॥

( सरलार्थः ) स आसमुद्रक्षितीशोऽपि त्वत्तो बिभेत्येव । बलवता सह विरोधः, परिणामविरसो भवति ॥ २३ ॥

( हिन्दी ) समस्त राजाओं और आसमुद्रान्त भूमण्डल पर अपना पूर्ण शासनाधिकार रखते हुए भी वह आपकी ओर से आने वाली विपत्ति से सदा चिन्तित ही रहा करता है। ठीक ही है— बड़ों के साथ रार टानने का परिणाम अच्छा नहीं होता ॥२३॥

ननु गूढाकारेङ्गितस्य तस्य मत्तो भयं कथं त्वया निर्धारितमित्याह—

कथाप्रसङ्गेन जनैरुदाहृतादनुस्मृताखण्डलसूनुविक्रमः ।
तवाभिधानाद्व्यथते नताननः स दुःसहान्मन्त्रपदादिवोरगः ॥

( अन्वयः ) कथाप्रसङ्गेन, जनैः, उदाहृतात्, तव अभिधानात्, अनुस्मृताखण्डलसूनुविक्रमः, ( सः ) सुदुःसहात्, मन्त्रपदात्, उरगः, इव, नताननः, व्यथते ॥ २४ ॥

( मल्लिनाथः ) कथेति । कथाप्रसङ्गेन गोष्ठीवचनेन जनैः । अन्यत्र कथाप्रसङ्गेन । विषवैद्येन । 'कथाप्रसङ्गो वार्तायां विषवैद्येऽपि वाच्यवत्'

इति विश्वः। एकवचनस्यातन्त्रत्वाज्जनविशेषणम्। उदाहृतादुच्चरितात्तवो-भिधानान्नामधेयात्स्मारकाद्धेतोः। 'हेतौ' इति पञ्चमी। 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः। अन्यत्र तवाभिधानात् 'नामैकदेशग्रहणे नाममात्रग्रहणम्' इति न्यायात्तश्च वश्च तवौ तार्क्ष्यवासुकी तयोरभिधानं यस्मि-न्पदे तस्मात्। यद्वा कथाप्रसङ्गेनजनाश्चेत्येकं पदम्। अनुस्मृताखण्डलसूनु-विक्रमः सन् दुःसहादतिदुःसहान्मन्त्रपदान्मन्त्रशब्दात्स्मारकाद्धेतोः। आखण्ड-लसूनुरिन्द्रानुजः। उपेन्द्रो विष्णुरिति यावत्। 'सूनुः पुत्रेऽनुजे रवौ' इति विश्वः। तस्य विः पक्षी। गरुड इत्यर्थः। तस्य क्रमः पादविक्षेपः। सोऽनु-स्मृतो येन स तथोक्तः स्मृतगरुडमहिमा। उरग इव नताननः सन्। व्यथते। 'पीडा बाधा व्यथा दुःखम्' इत्युत्कटमयदोषादिविकारो दुर्वार इति भावः। 'सर्वतो जयमन्विच्छेत्पुत्रादिच्छेत्पराजयम्' इति न्यायादर्जुनोत्कर्षकथनं युधिष्ठिरस्य भूषणमेवेति सर्वमवदातम् ॥२४॥

(सुबोधिनी) कथाप्रसङ्गेन (गोष्ठीवचनानुक्रमेण) जनैः (सभास्थितैः लोकैः) उदाहृतात् (उच्चारितात्) तव अभिधानात् ( नामधेयात् हेतोः ) अनुस्मृताखण्डलसूनुविक्रमः=अनुस्मृतः(अनुध्यातः)आखण्डलस्य(इन्द्रस्य) सूनोः (पुत्रस्य अर्जुनस्य) विक्रमः (पराक्रमः) येन तथाभूतः स दुर्योधनः दुःसहात् (सोढुमशक्यात्) मन्त्रपदात् 'विघ्ननाशकमन्त्रगतशब्दात् हेतोः) उरगः (सर्पः) इव, नताननः (अधोमुखः सन्) व्यथते (क्लेशमनुभवति)।

सर्पपक्षे—कथाप्रासङ्गेनजनैः (कथाप्रसङ्गा विषवैद्याः तेषाम् इनाः प्रभवः श्रेष्ठा इत्यर्थः, ते च ते जनाश्च तैः, विषवैद्योत्तमैः जनैः) उदा-हृतात् (उच्चारितात्) तवाभिधानात्। 'नामैकदेशग्रहणे नाममात्रग्रहण—' मिति न्यायात् 'आका—मा—वैष्वनन्तक' मित्यादिवत् † तः तार्क्ष्यः गरुड इत्यर्थः, वः वासुकिः, तश्च वश्च तवौ, तवयोरभिधानं नामधेयं यस्मिन् तस्मात् सुदुःसहात् मन्त्रपदात् ( मन्त्रपदवाक्यात्—मन्त्रपदमुपश्रुत्य—ल्यब्लोपे पञ्चमी ) अनुस्मृताखण्डलसूनुविक्रमः=अनुस्मृतः आखण्डलस्य इन्द्रस्य सूनुः अनुजः इन्द्रावरजो विष्णुरिति यावत् तस्य विः पक्षी गरुड

इत्यर्थः, तस्य क्रमः आक्रमणं येन तथाभूतः, उरगः इव ( सर्पः इव ) नतानन: सन् (नम्राननः सन्) 'कथाप्रसङ्गो वार्त्तायां विषवैद्येऽपि वाच्य-वत्' इति विश्वः । 'इन: सूर्ये प्रभौ' इत्यमरः । 'इनः पत्यौ नृपार्कयो' रिति च मेदिनी । 'आखण्डलः सहस्राक्षः' इति इन्द्रपर्य्याये अमरः । सूनुः पुत्रेऽनुजेऽर्के ना' इति मेदिनी । उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः' इति विष्णुपर्य्याये अमरः 'त्रि–विष्किर–पतत्रयः' इति पक्षिपर्य्याये अमरः । 'क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च' इति मेदिनी । 'पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः' इति मेदिनी ॥ २४ ॥

(समासः) कथाप्रसङ्गेन = कथानां प्रसङ्गस्तेन । आखण्डलस्य सूनुः आखण्डलसूनुः, तस्य विक्रमः आखण्डलसूनुविक्रमः, अनुस्मृतः आखण्डल-सूनुविक्रमो येन सः । नतानन: = नतम् आननं यस्य सः । मन्त्रपदात् = मन्त्रस्य पदं मन्त्र पदं तस्मात् ॥ २४ ॥

[वाच्य०]...अनुस्मृताखण्डलसूनुविक्रमेण...व्यथ्यते नतान-नेन...उरगेण ॥ २४ ॥

(सरलार्थः) कथाप्रसङ्गात् यदि कश्चिद् भवतो नाम कथयति तदा तत् श्रुत्वाऽसौ अर्जुनस्य पराक्रमं संस्मृत्य, विषहरमन्त्रश्रवणाद् विषधरो यथा अधोमुखः सन् व्यथते, तथाऽधोमुखः सन् व्यथामनुभवति ॥ २४ ॥

( हिन्दी ) बातों के सिलसिले में लोगों द्वारा आपका नाम लिये जाने पर अर्जुन के पराक्रम का स्मरण होते ही वह दुःख का अनुभव किया करता है, जैसे बड़े बड़े विषवैद्यों द्वारा सांप का मंत्र पढ़े जाते हुए उसमें के गरुड़ और वासुकि पद को सुन कर सांप सिर नीचा करके दुःखी होता है ॥ २४ ॥

युद्धाय प्रवर्त्तयति—

तदाशु कर्तुं त्वयि जिह्ममुद्यते विधीयतां तत्र विधेयमुत्तरम् ।
परप्रणीतानि वचांसि चिन्वतां प्रवृत्तिसाराः खलु मादृशां गिरः॥

( मल्लिनाथः ) तदिति । तत्तस्मात्त्वयि जिह्मं कपटं कर्तुमुद्यते । त्वां जिघांसावित्यर्थः । तत्र तस्मिन्दुर्योधने विधेयं कर्त्तव्यमुत्तरं प्रतिक्रियाशु विधीयतां क्रियताम् । ननु कर्तव्यमपि त्वयैवोच्यतामिति चेत्तत्राह-परेति । परप्रणीतानि परोक्तानि वचांसि चिन्वतां गवेषयतां मादृशां वार्ताहारिणामित्यर्थः । गिरः प्रवृत्तिसारा वार्तामात्रसाराः खलु । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । वार्तामात्रवादिनो वयम्, न तु कर्तव्यार्थोपदेशसमर्थाः । अतस्त्वयैव निर्धार्य कार्यमिति भावः । सामान्येन विशेषसमर्थनादर्थान्तरन्यासः॥

( सुबोधिनी ) तत् ( तस्माद्धेतोः ) त्वयि (त्वद्विषये) जिह्मं (कपटं) कर्त्तुम्, उद्यते (प्रवृत्ते) तत्र (तस्मिन् दुर्योधने) विधेयं (कर्त्तव्यम्) उत्तरं (प्रतिक्रिया) आशु (शीघ्रं) विधीयतां ( त्वया क्रियताम् ) । परप्रणीतानि (परोक्तानि) वचांसि (वाक्यानि) चिन्वतां (संगृह्णतां) मादृशां (मद्विधानां वार्त्ताहारिणां ) गिरः ( वाचः ) प्रवृत्तिसाराः ( वार्त्तामात्रसाराः ) खलु ( निश्चितं भवन्ति ) ॥ २५ ॥

(वाच्य०)...विधेहि...।...प्रवृत्तिसाराभिः...गीर्भिः भूयते।

( सरलार्थः ) एवं कपटचारिणि तस्मिन् भवता प्रतिकारः अवश्यं कर्तव्यः । कीदृशः प्रतिकारः कर्तव्यस्तत्राहमनभिज्ञः किञ्चिदपि वक्तुं नशक्नोमि, भवानेव प्रमाणम् ॥ २५ ॥

( हिन्दी ) इसलिए आपके साथ कपट व्यवहार करने के लिए तत्पर उस दुर्योधनके विषय में उचित प्रतिकार शीघ्र ही करना चाहिये । हम लोगों का कर्तव्य तो इतना ही है कि बाहर जनसाधारण में आपके सम्बन्ध में लोगों के जो उद्गार निकलें उन्हें उसी तरह आपके सामने लाकर रख देने चाहिए और उसके प्रतिकार में भी आपकी प्रवृत्ति करा देनी चाहिए ॥ २५ ॥

इतीरयित्वा गिरमात्तसत्क्रिये गतेऽथ पत्यौ वनसन्निवासिनाम् ।
प्रविश्य कृष्णासदनं महीभुजा तदाचचक्षेऽनुजसन्निधौ वचः ॥२६॥

(अन्वयः) वनसन्निवासिनां, पत्यौ, इति, गिरम्, ईरयित्वा, आत्तसत्क्रिये गते [ सति ] अथ, महीभुजा, कृष्णासदनं, प्रविश्य, अनुजसन्निधौ, तत्, वचः, आचचक्षे ॥ २६ ॥

[मल्लिनाथः] इतीति । वनसन्निवासिनां पत्यौ वनेचराधिप इति गिरमीरयित्वोक्त्वात्तसत्क्रिये गृहीतपारितोषिके गते सति । 'तुष्टिदानमेव चाराणां हि वेतनम् । ते हि तल्लोभात्स्वामिकार्येऽतीव त्वरयन्ते' इति नीतिवाक्यामृते । अथ महीभुजा राज्ञा कृष्णासदनं द्रौपदीभवनं प्रविश्यानुजसन्निधौ तद्वनेचरोक्तं वचो वाक्यमाचचक्षे आख्यातम् । अथवा कृष्णेति पदच्छेदः । सदनं प्रविश्यानुजसन्निधौ तद्वचः कृष्णा आख्याता । चक्षिङो दुहादेर्द्विकर्मत्वादप्रधाने कर्मणि लिट् ॥ २६ ॥

( सुबोधिनी ) वनसन्निवासिनां पत्यौ ( वनेचराणाम् अधिपे ) इति ( पूर्वोक्तां ) गिरं ( वाचम् ) ईरयित्वा ( उक्त्वा ) आत्तसत्क्रिये ( गृहीतपुरस्कारे, युधिष्ठिरप्रदत्तं पारितोषिकं गृहीत्वा इत्यर्थः ) गते ( प्रस्थिते सति ) अथ अनन्तरं महीभुजा (राजा युधिष्ठिरेण) कृष्णासदनं (द्रौपद्या भवनं ) प्रविश्य, अनुजसन्निधौ ( अनुजानां भ्रातॄणां भीमादीनां समीपे ) तत् ( वनेचरोक्तं ) वचः ( वाक्यम् ) आचचक्षे ( उक्तम् ) ॥२६॥

( समासः ) आत्तसत्क्रिये=आत्ता सत्क्रिया येन तस्मिन् । महीभुजा= महीं भुनक्तीति महीभुक् तेन । कृष्णासदनं = कृष्णायाः सदनम् । अनुजसन्निधौ = अनुजानां सन्निधिः तस्मिन् ॥ २६ ॥

( वाच्यपरिवर्तनम् )....महीभुक् ॥ २६ ॥

( सरलार्थः ) एतावदुक्त्वा पारितोषिकं गृहीत्वा वनेचरे प्रस्थिते सति युधिष्ठिरः द्रौपदीभवनं प्रविश्य तत्र स्थितान् भ्रातॄन् वनेचरकथितं सर्वं वाक्यमुवाच ॥२६॥

( हिन्दी ) वनवासियों के प्रति किरात के इस प्रकार कह चुकने पर उसे पारितोषिक देकर बिदा किया और उसके अन-

न्तर धर्मराज युधिष्ठिर ने द्रौपदी के मन्दिर में जाकर और २ भाइयों के सामने उसकी बातें कह सुनाई ॥ २६ ॥

तदा किं वृत्तमित्याह—

निशम्य सिद्धिं द्विषतामपाकृतीस्ततस्ततस्त्या विनियन्तुमक्षमा ।
नृपस्य मन्युव्यवसायदीपिनीरुदाजहार द्रुपदात्मजा गिरः ॥

( अन्वयः ) ततः, द्रुपदात्मजा, द्विषतां, सिद्धिं, निशम्य, ततस्त्याः, अपाकृतीः, विनियन्तुम्, अक्षमा, ( सती ) नृपस्य, मन्युव्यवसायदीपिनीः, गिरः उदाजहार ॥ २७ ॥

( मल्लिनाथः ) निशम्येति । अथ द्रुपदात्मजा द्रौपदी द्विषतां सिद्धिं वृद्धिरूपां निशम्य ततस्तदनन्तरम् । ततो द्विषद्भ्य आगतास्ततस्त्याः । 'अव्ययात्त्यप्' इति त्यप् अपाकृतीर्विकारान्विनियन्तुं निरोद्धुमक्षमा सती नृपस्य युधिष्ठिरस्य मन्युव्यवसाययोः क्रोधोद्योगयोर्दीपिनीः संवर्धिनीर्गिरो वाक्यान्युदाजहार । जगादेत्यर्थः ॥ २७ ॥

( सुबोधिनी ) ततः ( तदनन्तरं ) द्रुपदात्मजा (द्रुपदतनया, कृष्णा) द्विषतां ( शत्रूणां दुर्योधनादीनां ) सिद्धिं (सफलतां) निशम्य (श्रुत्वा) ततस्त्याः (तेभ्य आगताः तैः कर्त्तव्याः) अपाकृतीः (अपकारान्) विनियन्तुं (प्रतिकर्तुम्) अक्षमा ( अशक्ता सती ) नृपस्य ( राज्ञो युधिष्ठिरस्य ) मन्युव्यवसायदीपिनीः ( मन्युः = क्रोधः, व्यवसायः = उद्योगः, तयोः दीपिनीः=उत्तेजिनीः) गिरः (वक्ष्यमाणा वाचः) उदाजहार (उक्तवती) ॥२७॥

( समासः ) द्रुपदात्मजा=आत्मनः जाता, आत्मजा, द्रुपदस्य आत्मजा द्रुपदात्मजा । ततस्त्याः=तत आगताः ततस्त्याः । मन्युव्यवसायदीपिनीः, मन्युश्च व्यवसायश्च मन्युव्यवसायौ तयोः दीपिनीः ॥ २७ ॥

( वाच्य० ) ···अक्षमया···मन्युव्यवसायदीपिन्यः उदाजह्रिरे द्रुपदात्मजया ॥ २७ ॥

( सरलार्थः ) युधिष्ठिरोक्तं वनेचरवाक्यं श्रुत्वा द्रौपदी दुर्योधनो वनवासिनोऽप्यस्मान् अपकरिष्यतीत्याशङ्क्य, युधिष्ठिरस्य क्रोधोद्दीपनार्थं तत्प्रतिकारविधानार्थं च वक्ष्यमाणं वचनमुवाच ॥ २७ ॥

( हिन्दी ) शत्रुओं की सिद्धि को सुनकर भविष्य में उस से होने वाली विपत्ति को दूर करने में अपने आपको असमर्थ समझती हुई द्रौपदी महाराज युधिष्ठिर के क्रोध और उद्योग को उत्तेजित करने वाली वाणी बोली ॥२७॥

द्रौपदी प्रथमं तावत् स्वाविनयं परिहरति—

भवादृशेषु प्रमदाजनोदितं भवत्यधिक्षेप इवानुशासनम् ।
तथापि वक्तुं व्यवसाययन्ति मां निरस्तनारीसमया दुराधयः ॥

( अन्वयः ) भवादृशेषु, प्रमदाजनोदितं, अनुशासनं, अधिक्षेपः इव भवति । तथापि, निरस्तनारीसमयाः, दुराधयः, मां, वक्तुं, व्यवसाययन्ति ॥२८॥

( मल्लीनाथः ) भवादृशेष्विति । भवादृशा भवद्विधाः । पण्डिता इत्यर्थः । तेषु विषये । 'त्यदादिषु' इत्यादिना कञ् । 'आ सर्वनाम्नः' इत्याकारादेशः । प्रमदाजनोदितं स्त्रीजनोक्तम् । वदेः क्तः 'वचिस्वपि'—इत्यादिना संप्रसारणम् । अनुशासनं नियोगवचनमधिक्षेपस्तिरस्कार इव भवति । अतो न युक्तं वक्तुमित्यर्थः । तथापि वक्तुमनुचितत्वेऽपि निरस्तनारीसमयास्त्याजितशालीनतारूपस्त्रीसमाचाराः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । दुराधयः समयोल्लङ्घनहेतुत्वाद् दुष्टा मनोव्यथाः । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । मां वक्तुं व्यवसाययन्ति प्रेरयन्ति । न किंचिदयुक्तं दुःखिनामिति भावः ॥ २८ ॥

( सुबोधिनी ) भवादृशेषु ( त्वद्विधेषु पण्डितेषु ) प्रमदाजनोदितं ( स्त्रीजनेन कथितम् ) अनुशासनम् ( उपदेशवचनम् ) अधिक्षेपः ( तिरस्कारः ) इव भवति । तथापि ( ईदृशवचनस्य वक्तुमयुक्तत्वेऽपि ) निरस्त-

नारीसमयाः ( निरस्तः नाशितः नारीसमयः शालीनतारूपः स्त्रीसमाचारः यैः तथाविधाः ) दुराधयः ( दुरन्ता मनोव्यथाः ) मां वक्तुम् ( अनुचित-वचनं कथयितुं ) व्यवसाययन्ति ( नियोजयन्ति ) ॥ २८ ॥

( समासः ) भवादृशेषु=भवन्त इव दृश्यन्त इति भवादृशास्तेषु । प्रमदाजनोदितं=प्रमदाजनेन उदितम् । अनुशास्यत इति अनुशासनम् । निरस्तः नारीणां समयो यैः ते निरस्तनारीसमयाः ॥ २८ ॥

( वाच्य० ) प्रमदाजनोदितेन भूयते अधिक्षेपेण ˙˙˙ अनुशासनेन । ˙˙˙ व्यवसाय्ये अहं निरस्तनारीसमयैः दुराधिभिः ॥२८॥

( सरलार्थः ) त्वद्विधेषु पण्डितेषु मादृशीनां मूर्खाणाम् उपदेशस्तिरस्कार इव भवति । दुरन्तया मनोव्यथया उचितानुचितज्ञानशून्याऽहं किञ्चिद् ब्रवीमि ॥ २८ ॥

( हिन्दी ) यद्यपि आप जैसे विद्वान् पुरुषों को मुझ सरीखी स्त्रियों ने उपदेश देना यह एक प्रकार का तिरस्कार सा मालूम होता है फिर भी वर्तमान अवस्था ही मुझे कर्तव्याकर्तव्यविवेक शून्य बनाकर आपसे कुछ कहने के लिये प्रेरित करती है ॥२८॥

स्वदोषेणैव त्वया राज्यं हारितमित्याह—

अखण्डमाखण्डलतुल्यधामभिश्चिरं धृता भूपतिभिः स्ववंशजैः ।
त्वयात्महस्तेन मही मदच्युता मतङ्गजेन स्रगिवापवर्जिता ॥२९॥

(अन्वयः)आखण्डलतुल्यधामभिः, स्ववंशजैः, भूपतिभिः, चिरं अखण्डं, धृता, मही, मदच्युता, मतङ्गजेन, स्रक्, इव, त्वया, आत्महस्तेन, अपवर्जिता ॥ २९ ॥

(मल्लिनाथः) अखण्डमिति । आखण्डलतुल्यधामभिरिन्द्रतुल्यप्रभावैः। स्ववंशजैः भूपतिभिर्भरतादिभिश्चिरमखण्डमविच्छिन्नं धृता मही त्वया मदं च्योततीति मदच्युत् । क्विप् । तेन मदस्राविणा मतङ्गजेन स्रगिवात्महस्तेन

स्वकरेण । स्वचापलेनेत्यर्थः । अपवर्जिता परिहृता त्यक्ता । स्वदोषादेवय-मनर्थागम इत्यर्थः ॥ २९ ॥

(सुबोधिनी) आखण्डलतुल्यधामभिः (इन्द्रतुल्यपराक्रमैः) स्ववंशजैः (स्वकुलसंभूतैः) भूपतिभिः (राजभिः, भरतादिभिः) चिरं (बहुकालं व्याप्य) अखण्डम् (अविच्छिन्नं यथा स्यात् तथा) धृता (पालिता) मही (पृथ्वी) मदच्युता (मदक्षरणकारिणा, मदमत्तेन) मतङ्गजेन (करिणा) स्रक् (माल्यम्) इव, त्वया, आत्महस्तेन (स्वकरेण) अपवर्जिता (परित्यक्ता) ॥२९॥

(समासः) आखण्डलतुल्यधामभिः=आखण्डलस्य तुल्यं धाम येषां ते आखण्डलतुल्यधामानः, तैः । मदच्युता=मदं च्योततीति मदच्युत् तेन ॥

(वाच्यपरिवर्तनम्) धृतां···त्वं···महीं मदच्युत् मतङ्गजः स्रजम्···अपवर्जितवान् ॥ २९ ॥

(सरलार्थः) मदान्धो गजो यथा शोभार्थं स्वशिरसि पालकेन न्यस्तं पुष्पमाल्यम् अज्ञतया दूरे निक्षिपति, तथा त्वमपि पुरुषपरम्परागतं राज्यं स्वदोषेण परित्यक्तवान् असि ॥ २९ ॥

(हिन्दी) इन्द्रसदृश पराक्रमी पूर्वजों के शासन में चिरकाल पर्यन्त स्थित यह पृथ्वी आपने अपने हाथ से गवां दी । जैसे मदमस्त हाथी पहनाये हुए पुष्प के हार को गवां देता है ॥२९॥

शठे शाठ्यं समाचरेदिति नीतिमवजानन् शत्रुभिः पराभूयते इत्याह—

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधा न संवृताङ्गान्निशिता इवेषवः ॥३०

(अन्वयः) ये मायाविषु मायिनः न भवन्ति मूढधियः ते पराभवं व्रजन्ति । इषवः असंवृताङ्गान् इव शठाः तथाविधान् प्रविश्य, घ्नन्ति हि ॥ ३० ॥

( मल्लिनाथः ) व्रजन्तीति । मूढधियो निर्विवेकबुद्धयस्ते पराभवं व्रजन्ति ये मायाविषु मायावत्सु विषये 'अस्मायामेधा'—इत्यादिना विनिप्रत्ययः । मायिनो मायावन्तः । व्रीह्यादित्वादिनिप्रत्ययः । न भवन्ति । अत्रैवार्थान्तरं न्यस्यति—प्रविश्येति । शठा अपकारिणो धूर्तास्तथाविधान् कुटिलानसंवृताङ्गानवर्मितशरीरान्निशिता इषव इव प्रविश्य प्रवेशं कृत्वात्मीया भूत्वा घ्नन्ति हि । 'आर्जवं हि कुटिलेषु न नीतिः' इति भावः ॥३०॥

(सुबोधिनी) ये (जनाः) मायाविषु [प्रतारणापरेषु शठेषु] मायिनः (प्रतारणापराः) न भवन्ति, मूढधियः (निर्विवेकबुद्धयः) ते पराभवं (पराजयं) व्रजन्ति (प्राप्नुवन्ति) इषवः ( बाणाः ) असंवृताङ्गान् ( वर्म्मणा अनाच्छादितशरीरान् ) इव, प्रविश्य (अन्तर्गत्य, आत्मीया भूत्वा च) हि (निश्चितं) घ्नन्ति (नाशयन्ति) ॥३०॥

(समासः) मूढधियः = मूढा धीर्येषान्ते । असंवृताङ्गान् = असंवृतानि अङ्गानि येषां तान् ॥३०॥

(वाच्यपरिवर्तनम्) व्रज्यते तैः मूढधीभिः पराभवः ।...यैः... मायिभिः न भूयते ।...हन्यन्ते शठैः तथाविधाः असंवृताङ्गाः निशितैः—इषुभिः ॥ ३० ॥

(सरला:) ये मायाविषु मायां न कुर्वन्ति, ते तैः पराभूयते ॥३०॥

( हिन्दी ) जो व्यक्ति छली पुरुषों के साथ छल व्यवहार नहीं करते हैं वे पराभव को प्राप्त होते हैं। जैसे कवच नहीं पहिने हुए योद्धा बाणों द्वारा पराभूत होते हैं ॥ ३० ॥

स्वोपेक्षादोषमूलेयं ते राज्यच्युतिरित्याह—

गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां नराधिपः ।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥

(अन्वयः) अनुरक्तसाधनः, कुलाभिमानी, त्वत्, अन्यः, कः,

इव, नराधिपः, आत्मवधूम्, इव, गुणानुरक्तां, कुलजां, मनोरमां, श्रियं, परैः, अपहारयेत् ॥ ३१ ॥

(मल्लिनाथः) गुणेति । अनुरक्तसाधनोऽनुकूलसहायवान् । उक्तञ्च कामन्दकीये—'उद्योगादनिवृत्तस्य ससहायस्य धीमतः । छायेवानुगता तस्य नित्यं श्रीः सहचारिणी ॥' इति । कुलाभिमानी च त्वदन्यस्त्वत्तोऽन्यः । 'अन्यारात्' इत्यादिना पञ्चमी । क इव नराधिपो गुणैः सन्ध्यादिभिः सौन्दर्यादिभिश्चानुरक्तामनुरागिणीं कुलजां कुलक्रमादागतां कुलीनां च मनोरमां श्रियमात्मवधूमिव स्वभार्यामिव 'वधूर्जाया स्नुषा स्त्री च' । इत्यमरः । परैः शत्रुभिरन्यैश्चापहारयेत् । स्वयमेवापहार कारयेदित्यर्थः । कलत्रापहारवल्लक्ष्म्यपहारोऽपि राज्ञां मानहानिकरत्वादनुपेक्षणीय इति भावः ॥ ३१ ॥

( सुबोधिनी ) अनुरक्तसाधनः (अनुकूलसहायवान् ) कुलाभिमानी (वंशमर्यादाभिमानी) त्वत् अन्यः (भवतोऽपरः) क इव नराधिपः (राजा) आत्मवधूम् (निजपत्नीम्) इव, गुणानुरक्तां (गुणैः यानासनादिषड्भिः, पक्षे दयादाक्षिण्यादिभिश्च अनुरागिणीं ) कुलजां ( कुलक्रमागतां पक्षे सद्वंशजातां) मनोरमां (मनोहारिणीं) श्रियं (राज्यलक्ष्मीं) परैः (शत्रुभिः पक्षे अन्यैः) अपहारयेत् (अपहृतां कारयेत्) न कोऽपीत्यर्थः ॥ ३१ ॥

(समासः) अनुरक्तसाधनः = अनुरक्तानि साधनानि यस्य सः । कुलं अभिमन्यत इति कुलाभिमानी । नराणां अधिपः । आत्मनः वधूः तां आत्मवधूम् । गुणैः अनुरक्ता तां गुणानुरक्तां । मनोरमां = मनोरमयतीति मनोरमा ताम् ॥ ३१ ॥

(वाच्यपरिवर्तनम्) गुणानुरक्ता अनुरक्तसाधनेन कुलाभिमानिना कुलजा नराधिपेन . . .अन्येन केन . . .अपहार्य्येत मनोरमा आत्मवधूः . . .श्रीः इव ॥३१॥

(सरलार्थः) यथा कश्चित् सहायवानपि कौलीन्यमर्यादाभिज्ञोऽपि

स्वदोषेणैव गुणानुरागिणीं कुलीनां मनोहारिणीं पत्नीम् अन्यैरपहारयति, तथा त्वमपि भ्रात्रादिसहायसंपन्नोऽपि आत्मानं क्षत्रियकुलजं मन्यमानोऽपि गुणानुरागिणीं कुलक्रमागतां मनोरमां राज्यलक्ष्मीं स्वदोषेणैव शत्रुभिरपहारितवानसि ॥ ३१ ॥

(हिन्दी) कोई पुरुष जिस प्रकार कुलीन, वंशाभिमानी साहाय्ययुक्त होते हुए भी अपने दोषों के कारण गुणी, सत्कुलोत्पन्ना सुन्दरी पत्नी को दूसरों द्वारा हरने देता है उसी प्रकार आप भी भाइयों की सहायता रहते हुए क्षत्रिय कुल में उत्पन्न होने पर भी इस गुणयुक्ता, कुलक्रमागता, मनोहारिणी राज्यलक्ष्मी को अपने दोषों से शत्रुओं द्वारा अपहरण होने देते हैं ॥३१॥

अथ दशभिः कोपोद्दीपनं करोति—

भवन्तमेतर्हि मनस्विगर्हिते विवर्त्तमानं नरदेव ! वर्त्मनि ।
कथं न मन्युर्ज्वलयत्युदीरितः शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥

(अन्वयः) हे नरदेव ! उच्छिखः अग्निः, शुष्कं, शमीतरुम्, इव, एतर्हि, उदीरितः मन्युः, मनस्विगर्हिते, वर्त्मनि, विवर्त्तमानं, भवन्तं, कथं, न, ज्वलयति ॥ ३२ ॥

( मल्लिनाथः ) भवन्तमिति । हे नरदेव ! एतर्हीदानीम् । अस्मिन्नापत्कालेऽपीत्यर्थः 'एतर्हि संप्रतीदानीमधुना सांप्रतं तथा' इत्यमरः । 'इदमोर्हिल्' इति हिल्प्रत्ययः । 'एतेतौ रथोः' इत्येतादेशः । आपदमेवाह—मनस्विगर्हिते शूरजनजुगुप्सिते वर्त्मनि मार्गे विवर्त्तमानम् । शत्रुकृतां दुर्दशामनुभवन्तमित्यर्थः । भवन्तं त्वामुदीरित उद्दीपितो मन्युः क्रोधः । शुष्कं नीरसम् । 'शुषः कः' इति निष्ठातकारस्य ककारः । शमी चासौ तरुश्चेति विशेषणसमासः । तम् । शमीग्रहणं शीघ्रज्वलनस्वभावात्कृतम् । उच्छिख उद्गतज्वालः । 'घृणिज्वाले अपि शिखे'—इत्यमरः । वह्निरिव । कथं न ज्वलयति । ज्वलयितुमुचितमित्यर्थः । 'मितां ह्रस्वः' इति ह्रस्वः ॥३२॥

(सुबोधिनी) हे नरदेव ! ( हे राजन् ! ) उच्छिखः (उद्गतज्वालः) अग्निः (वह्निः) शुष्कं (नीरसं) शमीतरुम् इव (शमीवृक्षमिव) एतर्हि ( इदानीम् ) उदीरितः (मया उद्दीपितः) मन्युः ( क्रोधः ) मनस्विगर्हिते (शूरजननिन्दिते) वर्त्मनि (पथि, निश्चेष्टावस्थायामित्यर्थः) विवर्त्तमानम् (अवस्थितं) भवन्तं (त्वां) कथं न ज्वलयति (उद्दीपयति) ॥३२॥

(वाच्य०) भवान्...विवर्त्तमानः...मन्युना ज्वल्यते उदीरितेन शमीतरुः शुष्कः...अग्निना उच्छिखेन ॥३२॥

(सरलार्थः) शुष्कः शमीतरुः अग्निसंयोगेन तत्क्षणादेव ज्वलति, त्वं तु एतावन्तं कालं ईदृशीं शोचनीयदशामापन्नो मया पुनः पुनर्वाक्यबाणैर्विद्धोऽपि कथं कोपेन न ज्वलसि ॥ ३२ ॥

(हिन्दी) सूखा शमी का वृक्ष आग के संयोग से तुरन्त जल उठता है, पर आपकी ऐसी शोचनीय दशा हो गई है, कि मेरे वाक्य बाणों द्वारा बार बार विद्ध होने पर भी आप क्रोधित नहीं होते ॥ ३२ ॥

अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः ॥

(अन्वयः) अवन्ध्यकोपस्य, आपदां, विहन्तुः, देहिनः, स्वयम्, एव, वश्याः, भवन्ति । अमर्षशून्येन, जन्तुना, जातहार्देन ( सता ) जनस्य आदरः न । विद्विषा च सता जनस्य दरः न ॥३३॥

(मल्लिनाथः) अवन्ध्येति । अवन्ध्यं कोपो यस्य तस्यावन्ध्यकोपस्यात एवापदां विहन्तुः निग्रहानुग्रहसमर्थस्य । पुंस इति शेषः । देहिनो जन्तवः स्वयमेव वश्या वशंगता भवन्ति । 'वशं गत' इति यत्प्रत्ययः । अतस्त्वया कोपिना भवितव्यमित्यर्थः । व्यतिरेकेत्वनिष्टमाचष्टे—अमर्षशून्येन निष्कोपेन जन्तुना । कन्यया शोक इतिवत् । 'हेतौ' इति तृतीया । हृदयस्य कर्म हार्दं स्नेहः । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः ।

युवादित्वाद् 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः। जातहार्देन। जातस्नेहेन सता जनस्यादरो न। विद्विषा च सता दरो न। अमर्षहीनस्य रागद्वेषावकिञ्चित्करत्वादगण्यावित्यर्थः। अथवा विद्विषा सता दरो भयं न। 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमरः। एतस्मिन्नेव प्रयोगे संधिवशाद् द्विधा पदच्छेदः। पुंवाक्येषु न दोषः। अतः स्थाने कोपः कार्यस्त्याज्यस्त्वस्थाने कोप इति भावः॥ ३३॥

( सुबोधिनी ) अवन्ध्यकोपस्य ( अव्यर्थक्रोधस्य ) अत एव, आपदां विहन्तुः ( सर्वानिष्टप्रतिकारसमर्थस्य पुंसः ) देहिनः ( जन्तवः ) स्वयम् ( आत्मना ) एव वश्याः ( वशंगताः ) भवन्ति। अमर्षशून्येन ( क्रोधहीनेन ) जन्तुना ( जनेन ) जातहार्देन ( सञ्जातस्नेहेन, मित्रेण सता ) जनस्य ( लोकस्य ) आदरः न ( सम्मानना न भवति—तस्य मित्रत्वं शत्रुत्वं च कोऽपि न गणयतीत्यर्थः ] विद्विषा च सता जनस्य दरः ( भयं न भवति )॥ ३३॥

( समासः ) अवन्ध्यकोपस्य=अवन्ध्यः कोपो यस्य तस्य। अमर्षशून्येन=अमर्षेण शून्यः तेन। जातहार्देन=जातं हार्दं यस्य तेन ॥३३॥

( वाच्य० ) ... भूयते वश्यैः ... देहिभिः। आदरेण भूयते॥

( सरलार्थः ) अव्यर्थक्रोधस्य जनस्य सर्वे वश्याः भवन्ति। अक्रोधं तु जनं शत्रुं मित्रं वा सन्तं कोऽपि न गणयति ॥३३॥

( हिन्दी ) जिनका क्रोध व्यर्थ नही जाता ऐसे पुरुषों के सभी वश में रहते हैं। क्रोधहीन जनों से मित्रता या शत्रुता करने का कुछ भी मूल्य नहीं रहता ॥३३॥

परिभ्रमँल्लोहितचन्दनोचितः पदातिरन्तर्गिरि रेणुरूषितः।
महारथः सत्यधनस्य मानसं दुनोति नो कच्चिदयं वृकोदरः ॥३४॥

( अन्वयः ) लोहितचन्दनोचितः, महारथः, अयं वृकोदरः,

रेणुरूषितः, पदातिः ( सन् ) अन्तर्गिरि, परिभ्रमन्, सत्यधनस्य, ( तव ) मानसं, नो दुनोति कच्चित् ॥३४॥

( मल्लिनाथः ) परभ्रमन्निति । लोहितचन्दनोचित उचितलोहितचन्दनः । 'वाहिताग्न्यादिषु—'इति साधुः । अभ्यस्तरक्तचन्दन इत्यर्थः । 'अभ्यस्तेत्युचितं न्याय्यम् इति यादवः । महारथो रथचारी । उभयत्रापि प्रागिति शेषः । अद्य तु रेणुरूषितो धूलिच्छुरितः । पादाभ्यामतति गच्छतीति पदातिः, पदचारी । 'अज्यतिभ्यां च' इत्यनुवृत्तौ 'पादे च' इत्यौणादिक इणप्रत्ययः । 'पादस्य पदाज्यातिगोपहतेषु, इति पदादेशः । अन्तर्गिरि गिरिष्वन्तः । विभक्त्यर्थेऽव्ययीभावः । 'गिरेश्च सेनकस्य' इतिविकल्पात्समासान्ताभावः । परिभ्रमन्नयं वृकोदरो भीमः । सत्यधनस्येति सोल्लुण्ठनवचनम् । अद्यापि त्वया सत्यमेव रक्ष्यते, न तु भ्रातर इति भावः । तवेति शेषः । मानसं नो दुनोति । कच्चिन्न परितापयति । 'कच्चित्कामप्रवेदने' इत्यमरः । स्वाभिप्रायाविष्करणं कामप्रवेदनम् ॥ ३४ ॥

( सुबोधिनी ) लोहितचन्दनोचितः ( अभ्यस्तरक्तचन्दनः, यः पूर्वं सर्वदा रक्तचन्दनानुलिप्तकाय आसीत् ) महारथः ( महता रथेन गमनशीलः ) अयं वृकोदरः ( भीमसेनः ) रेणुरूषितः ( इदानीं धूलि धूसरितः ) पदातिः ( पदचारी सन् ) अन्तर्गिरि ( पर्वतानां मध्ये ) परिभ्रमन् ( सर्वतो विचरन् ) सत्यधनस्य ते ( सत्यप्रियस्य तव ) मानसं ( मनः ) नो दुनोति कच्चित् ( न परितापयति किम् ) ॥ ३४ ॥

( समासः ) लोहितचन्दनोचितः=लोहितञ्च तच्चन्दनं लोहितचन्दनं, उचितं लोहितचन्दनं येन सः । रेणुरूषितः । पदातिः=पद्भ्यां अतति इति पदातिः । अन्तर्गिरि=गिरिषु अन्त इत्यन्तर्गिरि । सत्यधनस्य=सत्यमेव धनं यस्य तस्य ॥ ३४ ॥

(वाच्य०) परिभ्रमता लोहितचन्दनोचितेन पदातिना 'रेणुरूषितेन महारथेन' 'मानसं' 'दूयते' 'अनेन वृकोदरेण ॥३४॥

( सरलार्थः ) योऽयं मध्यमपाण्डवः पूर्वं रक्तचन्दनविलिप्तकायः रथचारी आसीत्, तम् इदानीं धूलिधूसरितं पादचारेण गिरिसङ्कटे परिभ्रमन्तं दृष्ट्वा दुःखं नानुभवसि ? अहो ते सत्य प्रियता ॥ ॥ ३४ ॥

( हिन्दी ) यह भीमसेन सारे शरीर में सुन्दर रक्तचन्दन लगाये रहता था और महान् रथ पर सवार होता था, इसे अब इस प्रकार धूल से भरे हुये पैरों से पहाड़ २ घूमते हुए देखकर भी क्या आपको दुःख नहीं होता ? ॥ ३४ ॥

विजित्य यः प्राज्यमयच्छदुत्तरान्कुरूनकुप्यं वसु वासवोपमः ।
स वल्कवासांसि तवाधुना हरन् करोति मन्युं न कथं धनञ्जयः ॥३५॥

( अन्वयः ) वासवोपमः, यः, उत्तरान्, कुरून्, विजित्य, प्राज्यम्, अकुप्यं, वसु, अयच्छत्, सः, धनञ्जयः, अधुना, वल्कवासांसि, आहरन्, तव, मन्युं कथं, न, करोति ॥ ३५ ॥

( मल्लिनाथः ) विजित्येति । वासव इन्द्र उपमा उपमानं यस्य स वासवोपम इन्द्रतुल्यः यो धनञ्जयः । उत्तरान्कुरून् मेरोरुत्तरान् मानुषान् देशविशेषान्विजित्य प्राज्यं प्रभूतम् । 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः । कुप्यादन्यदकुप्यं हेमरूप्यात्मकम् 'स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते । ताभ्यां यदन्यत्तत्कुप्यम्' इत्यमरः । वसु धनमयच्छद्दत्तवान् । 'पाघ्रा-,इत्यादिना दाणो यच्छादेशः । सः, धनं जयतीति धनञ्जयोऽर्जुनः । 'संज्ञायां भृतृवृजि' इत्यादिना खच्प्रत्ययः । 'अरुर्द्विषत्' इत्यादिना मुमागमः अधुनाऽस्मिन् काले । 'अधुना' इति निपातनात्साधुः । वल्कवासांस्याहरन् कथं तव मन्युं क्रोधं दुःखं वा न करोति ॥ ३५ ॥

( सुबोधिनी ) वासवोपमः ( इन्द्रसदृशः ) यः, उत्तरान् कुरून् ( तदाख्यान् देशान् ) विजित्य ( स्वायत्तीकृत्य ) प्राज्यं ( प्रचुरं ) अकुप्यं ( हेमरूप्यात्मकं ) वसु ( धनम् ) अयच्छत् ( तुभ्यं प्रादात् ) सः ( धनञ्जयः ( अर्ज्जुनः ) अधुना ( इदानीं ) वल्कवासांसि ( वल्कल-

रूपवस्त्राणि ) आहरन् ( संगृह्णन् ) मन्युं ( दुःखं, शत्रून् प्रति क्रोधं वा ) कथं न करोति ( कथं न जनयति ) ॥ ३५ ॥

( समासः ) वासवोपमः = वासवः उपमा यस्य सः । वल्कवासांसि वल्कलान्येव वासांसि तानि । न कुप्यमकुप्यम् ॥ ३५ ॥

( वाच्य० ) येन प्राज्यम् अदीयत अकुप्यं वासु वसवोपमेन । तेन ''आहरता क्रियते मन्युः ''धनञ्जयेन ॥३५॥

( सरलार्थः ) योऽर्जुनः पूर्वमुत्तरान् कुरून् विजित्य प्रभूतं धनं तुभ्यं आदात् स इदानीम् अस्माकं परिधानार्थं वल्कलान्याहरतीति दृष्ट्वा कथं त्वं दुःखितो न भवसि ॥३५॥

(हिन्दी) जिस अर्जुन ने पहिले उत्तरदेश के कौरवों को जीत-कर आपको बहुत सा धन लाकर दिया वही इस समय हम लोगों को पहनने के लिये वृक्षों की छाल इधर उधर से लाया करता है, क्या यह देखकर भी आपको कष्ट नहीं होता ? ॥३५॥

वनान्तशय्याकठिनीकृताकृती कचाचितौ विष्वगिवागजौ गजौ ।
कथं त्वमेतौ धृतिसंयमौ यमौ विलोकयन्नुत्सहसे न बाधितुम् ॥

(अन्वयः) वनान्तशय्याकठिनीकृताकृती, विष्वक्, कचाचितौ, अगजौ, गजौ, इव, एतौ, यमौ, विलोकयन्, त्वं, कथं धृतिसंयमौ बाधितुं न उत्सहसे ॥३६॥

( मल्लिनाथः ) वनान्तेति । वनान्तो वनभूमिरेव शय्या तया कठि-नीकृताकृती कठिनीकृतदेहौ । 'आकारो देह आकृतिः' इति वैजयन्ती । विष्वक्समन्तात् । 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि, इत्यमरः । कचाचितौ कचव्याप्तौ । विशीर्णकेशावित्यर्थः । अत एवागजौ गिरिसम्भ-वौ गजाविव स्थितावेतौ यमौ युग्मजातौ । माद्रीपुत्रावित्यर्थः । 'यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च' इति विश्वः । विलोकयँस्त्वं कथं

धृतिसंयमौ सन्तोषनियमौ । 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्वः । बाधितुं नोत्सहसे न प्रवर्तसे । 'शकधृष'–इत्यादिना तुमुन् । अहो ते महद्धैर्यमितिभावः ॥३६॥

(सुबोधिनी) वनान्तशय्याकठिनीकृताकृती (वनान्तो वनभूरेव शय्या तया कठिनीकृता कर्कशीकृता आकृतिर्ययोस्तौ, भूमिशयनवशात् कर्कशीभूतकायौ, विष्वक् ( समन्तात् ) कचाचितौ (केशव्याप्तौ, विकीर्णमूर्द्धजौ ) "अत एव" अगजौ ( गिरिसम्भवौ ) गजौ ( हस्तिनौ ) इव 'स्थितौ एतौ' यमौ ( यमजौ माद्रीसुतौ नकुलसहदेवौ ) विलोकयन् (पश्यन्) त्वं, कथं ( केन प्रकारेण , धृतिसंयमौ ( धृतिं सन्तोषं संयमं धैर्यं च ) बाधितुं ( परित्यक्तुं ) न उत्सहसे ( न प्रवर्तसे ) ॥ ३६ ॥

(समासः) अगजौ = अगे जातौ । न कठिना अकठिना, अकठिना कठिना कृतेति कठिनीकृता, वनान्त एव शय्या वनान्तशय्या, तया कठिनीकृता आकृतिर्ययोस्तौ । कचाचितौ = कचैः आचितौ । धृतिसंयमौ = धृतिश्च संयमश्च तौ ॥ ३६ ॥

(वाच्य०)...त्वया...विलोकयता उत्सह्यते...॥३६॥

(सरलार्थः) स्वभावतः कोमलाङ्गावपि भूमिशयनात् कठिनाङ्गौ मातृहीनाविमौ नकुलसहदेवौ दृष्ट्वा कथमिदानीमपि त्वं सन्तोषमवलम्ब्य वर्तसे॥

(हिन्दी) स्वभावतः कोमलाङ्ग पर जमीन पर सोने के कारण कड़े कड़े शरीर वाले, बड़े २ बाल वाले, मातृहीन नकुल और सहदेव को देखकर आप किस प्रकार संतोष कर बैठे हैं ॥३६॥

भ्रातृणां दशां वर्णयित्वा इदानीं राज्ञः स्वदशामाह—

इमामहं वेद न तावकीं धियं विचित्ररूपाः खलु चित्तवृत्तयः ।
विचिन्तयन्त्या भवदापदं परां रुजन्ति चेतः प्रसभं ममाधयः ॥

(अन्वयः) अहम्, इमां, तावकीं, धियं, न, वेद । चित्तवृत्तयः,

विचित्ररूपाः, खलु । परां, भवदापदं, विचिन्तयन्त्याः, मम, आधयः, चेतः, प्रसभं, रुजन्ति ॥३७॥

( मल्लिनाथः ) इमामिति । इमां वर्तमानाम् । तवेमां तावकीं त्वदीयाम् । 'तस्येदम्' इत्यण्प्रत्ययः । 'तवकममकावेकवचने' इति तवकादेशः । धियं त्वदापद्विषयां चित्तवृत्तिमहं न वेद कीदृशी वा न वेद्मि । परबुद्धेरप्रत्ययत्वादिति भावः । 'विदो लटो वा' इति लटो णलादेशः । न चात्मदृष्टान्तेनापन्नत्वाद् दुःखित्वमनुमातुं शक्यते । धीरादिष्वनैकान्तिकत्वादित्याशयेनाह–चित्तवृत्तयो विचित्ररूपा धीराधीराद्यनेकप्रकाराः खलु । किन्तु परामुत्कृष्टां भवदापदं विचिन्तयन्त्या भावयन्त्या मम चेतश्चित्तम् । आधयो मनोव्यथाः । 'उपसर्गे घोः किः' इति किप्रत्ययः । प्रसभं प्रसह्य रुजन्ति भञ्जन्ति । 'रुजो भङ्गे' इति धातोर्लट् । पश्यतामपि दुःसहा दुःखजननी त्वद्विपत्तिरनुभवितारं त्वां न विकरोतीति महच्चित्रमित्यर्थः । चेत इति 'रुजार्थानां भाववचनानामज्वरेः' इति षष्ठी न भवति । तत्र शेषाधिकाराच्छेषत्वस्य विवक्षितत्वादिति ॥ ३७ ॥

(सुबोधिनी) अहम्, इमाम् (ईदृशीं) तावकीं (त्वत्सम्बन्धिनीं) धियं बुद्धिं न वेद (न जानामि) चित्तवृत्तयः (लोकानां मनोभावाः) विचित्ररूपाः (अनेकप्रकाराः भवन्ति) खलु (इति प्रसिद्धिः) पराम् (उत्कर्षं प्राप्तां) भवदापदं ( तव विपदं ) विचिन्तयन्त्याः ( भावयन्त्याः ) मम, आधयः (मनोव्यथाः) चेतः (मनः) प्रसभं (बलात्) रुजन्ति (पीडयन्ति) ॥३७॥

(समासः) तावकीं=तव इयं तावकी तां । चित्तवृत्तयः=चित्तस्य वृत्तयः चित्तवृत्तयः । विचित्ररूपाः विचित्रं रूपं यासां ताः ॥३७॥

(वाच्य०) इयं मया...विद्यते तावकी धीः । विचित्ररूपाभिः चित्तवृत्तिभिः भूयते ।...रुज्यते...आधिभिः ॥३७॥

(सरलार्थः) कीदृशी ते बुद्धिर्मया न ज्ञायते । विभिन्नबुद्धयो हि लोकाः

किन्तु तव यादृशीमवस्थामालोक्य मम दुःखं जायते, तादृश्यामवस्थायां त्वं स्वयं धैर्य्यं धत्से इति महदाश्चर्य्यम् ॥ ३७ ॥

(हिन्दी) आपकी कैसी बुद्धि है मैं नहीं जानती। प्रत्येक मनुष्य की भिन्न २ बुद्धि होती है। किन्तु आपकी दशा को देखकर मुझे कष्ट होता है। पर आश्चर्य है कि आप ऐसी अवस्था में किस प्रकार धैर्य धारण किये हैं? ॥ ३७ ॥

पुराधिरूढः शयनं महाधनं विबोध्यसे यः स्तुतिगीतिमङ्गलैः।
अदभ्रदर्भामधिशय्य स स्थलीं जहासि निद्रामशिवैः शिवारुतैः॥३८

(अन्वयः) यः (त्वं), महाधनं, शयनम्, अधिरूढः (सन्), स्तुतिगींतिमङ्गलैः, पुरा, विबोध्यसे, सः(त्वम्) अदभ्रदर्भां, स्थलीम्, अधिशय्य, अशिवैः; शिवारुतैः निद्रां, जहासि ॥ ३८ ॥

(मल्लिनाथः) पुरेति। यस्त्वं महाधनं बहुमूल्यं श्रेष्ठम्। "महाधनं महामूल्ये" इति विश्वः। शयनं शय्यामधिरूढः सन्। स्तुतयो गीतयश्च ता एव मङ्गलानि तैः करणभूतैः पुरा विबोध्यसे। वैतालिकैरिति शेषः। पूर्वं बोधित इत्यर्थः। 'पुरि लुङ् चास्मे' इति भूतार्थे लट्। सः त्वमदभ्रदर्भां बहुकुशाम्। 'अस्त्री कुशं कुथो दर्भः' इति। 'अदभ्रं बहुलं बहु' इति चामरः। स्थलीमकृत्रिमभूमिम्। 'जानपद–' इत्यादिना कृत्रिमार्थे ङीप्। एतेन दुःसहस्पर्शत्वमुक्तम्। 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम्। अधिशय्य शयित्वा। 'अयङ् यि क्ङिति' इत्ययङादेशः अशिवैरमङ्गलैः शिवारुतैः क्रोष्टुवासितैः। 'शिवा हरीतकी क्रष्टा शमी नद्यामलक्युभे' इति वैजयन्ती। निद्रां जहासि। अद्येति शेषः ॥ ३८ ॥

(सुबोधिनी) यस्त्वं महाधनं (बहुमूल्यं) शयनं (शय्याम्) अधिरूढः (अधिशयितः सन्) स्तुतिगीतिमङ्गलैः ( मङ्गलमयीभिः स्तुतिभिर्गीतिभिश्च ) पुरा (पूर्वं) विबोध्यसे (जागर्य्यसे) वैतालिकैरिति शेषः। स त्वम् अदभ्र-

दर्भां (बहुकुशाच्छादितां) स्थलीम् (अकृत्रिमां भूमिम्) अधिशय्य (तत्र शयनं कृत्वा) निद्रां, जहासि (इदानीं त्यजसि) ॥३८॥

(समासः) महाधनं=महत् धनं मूल्यं यस्य तत् । स्तुतिगीतिमङ्गलैः= स्तुतयश्च गीतयश्च ता एव मङ्गलानि तैः अदभ्रदर्भां=अदभ्रा दर्भा यस्यां सा तां । शिवारुतैः=शिवानां रुतानि तैः ॥३८॥

( वाच्य० ) अधिरूढेन···विबोधयन्ति (वैतालिकाः) यं··· तेन···हीयते निद्रा ॥६८॥

(सरलार्थः) यस्य ते पूर्वं दुग्धफेननिभायां शय्यायां शयितस्य वैतालिकानां स्तुतिगीतिभिर्निद्राभङ्गो भवतिस्म, तस्य ते साम्प्रतं कुशावृतायां भूमौ शयानस्य शृगालरवैर्निद्राभङ्गो भवति । अहो दशाविपर्य्ययः ॥३८॥

(हिन्दी) जो पहिले बहुमूल्य शय्यापर सोते थे और वैतालिकों के मधुर स्तुतिगीत से जागा करते थे वही आप इस समय कुशा से व्याप्त पृथ्वी पर सोते हैं । और सियार के अमंगल सूचक शब्द से जाग उठते हैं ॥३८॥

पुरोपनीतं नृप रामणीयकं द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपुः ॥

(अन्वयः) हे नृप ! यत्, एतत्, पुरा द्विजातिशेषेण, अन्धसा, रामणीयकम्, उपनीतम्, अद्य, वन्यफलाशिनः (सतः) ते, तत्, वपुः, यशसा, समं, परं, कार्श्यं, परैति ॥३९॥

( मल्लिनाथः ) पुरेति हे नृप ! यदेतपुरोवर्ति वपुः पुरा द्विजातिशेषेण द्विजभुक्तावशिष्टेनान्धसान्नेन । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः, रमणीयस्य भावो रामणीयकं मनोहरत्वमुपनीतं प्रापितम् । नयतेर्द्विकर्मकत्वात् प्रधाने कर्मणि क्तः । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकमणाम्' इति वचनात् । अद्य वन्यफलाशिनस्ते तव तद्वपुर्यशसा समं परमतिमात्रं

कार्श्यं परैति प्राप्नोति। उभयमपि क्षीयत इत्यर्थः। अत्र सहोक्तिरलङ्कारः। तदुक्तं काव्यप्रकाशे—'सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्' इति॥

(सुबोधिनी) हे नृप ! (हे राजन् !) यद् एतत् (इदं त्वदीयं वपुः) पुरा (पूर्वं) द्विजातिशेषेण (अतिथिब्राह्मणभुक्तावशिष्टेन) अन्धसा (अन्नेन) रामणीयकं (मनोहरत्वम्) उपनीतं (प्रापितम्) अद्य (इदानीं) वन्यफलाशिनः (वनोद्भवफलभोजिनः सतः) ते (तव) तत् वपुः (शरीरं) यशसा (कीर्त्या) समं (सह) परम् (अत्यन्तं) कार्श्यं (क्षीणतां) परैति (प्राप्नोति) ॥३९॥

(समासः) द्विजातिशेषेण = द्वे जाती येषां ते द्विजातयः, द्विजातिभ्यः शेषं तेन—यदुक्तम्—"जन्मना जायते शूद्रः संस्कारात् द्विज उच्यते," इति। रामणीयकं—रमणीयस्य भावः रामणीयकं। वन्यफलाशिनः = वने भवानि वन्यानि, वन्यानि च तानि फलानि वन्यफलानि, तानि अश्नातीति तस्य। कार्श्यं = कृशस्य भावः कार्श्यम् ॥३९॥

(वाच्य॰) उपनीतवत्...द्विजातिशेषं...अन्धः। तेन... परैयते...वपुषा ॥३९॥

(सरलार्थः) त्वं पूर्वम् अतिथिब्राह्मणभोजनानन्तरं नानारसमन्नं भुक्त्वा हृष्टपुष्टशरीर आसीः, इदानीं शत्रुभिः पीडितो यथा क्षीणयशा अभवस्तथा वन्यफलमात्राहारः सन् क्षीणदेहश्च संवृत्तः ॥३९॥

(हिन्दी) पहिले, अतिथि और ब्राह्मण आदि के भोजन करने के बाद बचे हुए अनेक रस से युक्त अन्न को खाकर आप हृष्ट पुष्ट बने रहे, वही इस समय यश रहित होकर वन के फल फूल पर दिन बिता रहे हैं। जिससे शरीर दुर्वल हो गया है ॥३९॥

अनारतं यौ मणिपीठशायिनावरञ्जयद्राजशिरःस्रजां रजः।
निषीदतस्तौ चरणौ वनेषु ते मृगद्विजालूनशिखेषु बर्हिषाम् ॥४०॥

(अन्वयः) राजशिरःस्रजां, रजः, अनारतं, मणिपीठशायिनौ,

यौ, अरञ्जयत्, तौ, ते, चरणौ, मृगद्विजालूनशिखेषु, वर्हिषां, वनेषु, निषीदतः ॥४०॥

( मल्लिनाथः ) अनारतमिति । अनारतमजस्रं मणिपीठशायिनौ मणिमयपादपीठस्थायिनौ यौ चरणौ राजशिरःस्रजां नमद्भूपालमौलिस्रजां रजः परागोऽरञ्जयत्, तौ ते चरणौ मृगैर्द्विजैश्च तपस्विभिरालूनशिखेषु च्छिन्नाग्रेषु वर्हिषां कुशानाम् । 'बर्हिः कुशहुताशयोः' इति विश्वः । वनेषु निषीदतस्तिष्ठतः ॥ ४० ॥

( सुबोधिनी ) राजशिरःस्रजां ( प्रणतानां राज्ञां शिरःस्थितानां पुष्पमालानां ) रजः ( परागः ) अनारतं ( सततं ) मणिपीठशायिनौ ) मणिमयपादपीठावस्थायिनौ ) यौ ( चरणौ) अरञ्जयत्, तौ, ते ( तव ) चरणौ ( पादौ ) मृगद्विजालूनशिखेषु ( मृगाणां हरिणानां द्विजाः दन्ताः तैः आलूनाः ईषत् छिन्ना शिखा अग्राणि येषु तेषु ) वर्हिषां (कुशानां) वनेषु निषीदतः ( इदानीं तिष्ठतः ) ॥ ४० ॥

( समासः ) राजशिरःस्रजां=राज्ञां शिरांसि तेषु ( स्थिताः ) तेषां वा स्रजः तासाम् । मणिपीठशायिनौ=मणिखचितं पीठं, मणिपीठं, तस्मिन् शयात इति मणिपीठशायिनौ । मृगद्विजालूनशिखेषु=मृगाणां द्विजाः ( दन्ताः ) तैः आलूनाः शिखा आग्रणि येषु तेषु ॥ ४० ॥

( सरलार्थः ) तव यौ चरणौ पुरा मणिमयपीठे स्थितौ तथा भयप्रणतभूपालानां शिरस्थमाल्यरजोभी रञ्जितावास्तां, ताविदानीं कुशकण्टकक्षतजेन रुधिरेण रञ्जितौ भवतः ॥ ४० ॥

(वाच्य० )...अरज्येतां...रजसा । निषद्यते ताभ्यां चरणाभ्यां ४०

( हिन्दी ) आपके जो चरण पहिले मणिमय सिंहासन पर रहते तथा भयभीत राजाओं के शिरमें लगी हुई मालाओं की रज से रंजित रहते थे, वेही इस समय कुश और कांटोंके चुभजाने के कारण रक्त से रंजित रहा करते हैं ॥४०॥

द्विषन्निमित्ता यदियं दशा ततः समूलमुन्मूलयतीव मे मनः ।
परैरपर्यासितवीर्यसम्पदां पराभवोऽप्युत्सव एव मानिनाम् ॥४१॥

( अन्वयः ) यद्, इयं, दशा, द्विषन्निमित्ता, ततः, मे, मनः, समूलम्, उन्मूलयति, इव । परैः, अपर्य्यासितवीर्य्यसम्पदां, मानिनां, पराभवः, अपि, उत्सवः, एव ॥४१॥

(मल्लिनाथः) द्विषदिति । यद्यतः कारणादियं दशाऽवस्था । 'दशा वर्ती-ववस्थायाम्' इति विश्वः । द्विषन्तो निमित्तं यस्याः सा । 'द्विषोऽमित्रे' इति शतृप्रत्ययः । अतो मे मनः समूलं साशयमुन्मूलयतीवोत्पाटयतीव । दैवि-कीत्वापन्न दुःखायेत्याह परैरिति । परैः शत्रुभिरपर्यासितापर्यावर्तिता । वीर्य-संपद्येषां तेषां मानिनां पराभवो विपदप्युत्सव एवेति वैधर्म्येणार्थान्तरन्यासः मानहानिर्दुःसहा, न त्वापदितिभावः ॥४१॥

( सुबोधिनी ) यत् ( यस्मात्कारणात् ) इयं (वर्तमाना ) दशा ( तव अवस्था ) द्विषन्निमिता ( द्विषन्तः शत्रवो निमित्तानि यस्याः सा, शत्रुकृता भवति ) ततः ( तस्मात् कारणात् ) मे ( मम ) मनः, समूलं ( धैर्य्यज्ञा-नाश्रयसहितं यथा स्यात् तथा ) उन्मूलयति ( उत्पाटयति ) इव । परैः ( शत्रुभिः ) अपर्य्यासितवीर्यसम्पदाम् ( अनिराकृतबलश्रियाम्, अपराजि-तानां ) मानिनां ( मानवतां पुरुषाणां ) पराभवः ( विपत्–दैवकृतो दशाविपर्य्ययः ) अपि ( तु ) उत्सवः ( सम्पत् ) एव भवति ॥४१॥

( समासः ) द्विषिन्निमित्ता = द्विषन्तः निमित्तानि यस्याः सा । अपर्या-सितवीर्यसम्पदाम् = वीर्यञ्च सम्पच्च वीर्यसम्पदौ अपर्यासिते वीर्यसम्पदौ येषां तेषाम् ॥४१॥

(वाच्य०) द्विषन्निमित्तया भूयते...अनया दशया...उन्मूल्यते... मनः । पराभवेण...उत्सवेन भूयते...॥४१॥

( सरलार्थः ) शत्रुकृतामिमां दुर्दशां दृष्ट्वा मनो मे व्यथते । दैवकृता चेदियं दशा, तदा तत्र धैर्यावलम्बनमनुचितं न स्यात् ॥४१॥

( हिन्दी ) हम लोग शत्रु के कारण आज इस स्थिति पर पहुंचे हैं इसको जानकर मुझे बड़ा कष्ट होता है। शत्रु से पराजित नहीं किये गये पराक्रमी जनों की दैवकृत विपत्ति विपत्ति नहीं कही जाती, उसे उत्सव कहा करते हैं ॥४१॥

विहाय शान्तिं नृप धाम तत्पुनः प्रसीद सन्धेहि वधाय विद्विषाम् ।
व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः ॥४२॥

(अन्वयः) हे नृप ! शान्तिं, विहाय, विद्विषां, वधाय, तत्, धाम, पुनः, सन्धेहि, प्रसीद । निःस्पृहाः, मुनयः, शत्रून्, अवधूय, शमेन, सिद्धिं, व्रजन्ति, भूभृतः, न ॥४२॥

(मल्लिनाथः) हे नृप ! शान्तिं विहाय तत्प्रसिद्धं धाम तेजो विद्विषां वधाय पुनः सन्धेह्यङ्गीकुरु प्रसीद । प्रार्थनायां लोट् । ननु शमेन कार्यसिद्धौ किं क्रोधेनेत्यत्राह व्रजन्तीति । निःस्पृहा मुनयः शत्रूनवधूय निर्जित्य शमेन क्रोधवर्जनेन सिद्धिं व्रजन्ति । भूभृतस्तु न । कैवल्यकार्यवद्राजकार्यं न शान्तिसाध्यमित्यर्थः ॥४२॥

(सुबोधिनी) हे नृप ! (हे राजन् !) शातिं (क्षमां) विहाय (परित्यज्य) विद्विषां (शत्रूणां) वधाय (विनाशाय) तत् (प्रसिद्धं) धाम (तेजः) पुनः (भूयः) सन्धेहि (प्रवर्त्तय) प्रसीद (प्रसन्नो भव) निःस्पृहाः (विषयासक्तिरहिताः) मुनयः, शत्रून् (अरीन्) अवधूय (उपेक्ष्य) शमेन (शान्त्या, क्षमयेत्यर्थः) सिद्धिं, व्रजन्ति (प्राप्नुवन्ति) भूभृतः ( राजानस्तु ) न ( सिद्धिं न व्रजन्ति ) ॥ ४२ ॥

( समासः ) भूभृतः = भुवं बिभ्रतीति भूभृतः । निःस्पृहाः = निर्गता स्पृहा येषां ते ॥४२॥

[ वाच्यपरिवर्तनम् ] प्रसद्यतां संधीयताम्···। व्रज्यते··· निःस्पृहैः···सिद्धिः मुनिभिः··· भूभृद्भिः ॥ ४२ ॥

( सरलार्थः , इदानीं शमं त्यक्त्वा तेजः प्रकाशय । संसारविरक्ता

मुनय एव क्षमया सिद्धिं लभन्ते न तु संसारानुरक्ता राजानः। ते क्रोधं विना सिद्धिं न यान्ति ॥४२॥

[हिन्दी] इस समय, हे नृप ! शान्ति को छोड़ दीजिये और पुनः उस तेज को धारण कीजिये । संसारत्यागी मुनिजन ही क्षमा द्वारा सिद्धि को प्राप्त कर सकते हैं न कि राजा लोग। वे क्रोध के बिना सिद्धि नहीं प्राप्त कर सकते ॥४२॥

पुरःसरा धामवतां यशोधनाः सुदुःसहं प्राप्य निकारमीदृशम् ।
भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त हता मनस्विता ॥४३॥

[अन्वयः] धामवतां, पुरःसराः, यशोधनाः, भवादृशाः, ईदृशं, सुदुःसहं, निकारं, प्राप्य, चेत्, रतिम्, अधिकुर्वते [तदा] हन्त, मनस्विता, निराश्रया [सती] हता ॥ ४३ ॥

[मल्लिनाथः] पुर इति । किं च धामवतां तेजस्विनाम् । परनिकारासहिष्णूनामित्यर्थः । पुरः सरन्तीति पुरःसराः । 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टप्रत्ययः। यशोधना भवादृशाः सुदुःसहमतिदुःसहमीदृशमुक्तप्रकारं निकारं पराभवं प्राप्य रतिं संतोषमधिकुर्वते चेत्तर्हि । हन्त इति खेदे। मनस्विताऽभिमानिता निराश्रया सती हता। तेजस्विजनैकशरणत्वान्मनस्विताया इत्यर्थः । अतः पराक्रमितव्यमिति भावः । यद्यप्यत्र प्रसहनस्यासङ्गतेरधिपूर्वात्करोतेः 'अधेः प्रसहने' इत्यात्मनेपदं न भवति । 'प्रसहनं परिभवः' इति काशिका । तथाप्यस्याः कर्त्रभिप्रायविवक्षायामेव प्रयोजनत्वात्कर्त्रभिप्राये 'स्वरितञितः'—इत्यात्मनेपदं प्रसिद्धम् ॥४३॥

[सुबोधिनी] धामवतां [तेजस्विनां] पुरःसराः [अग्रेसराः] यशोधनाः [कीर्तिधनाः, यशःप्रिया इत्यर्थः] भवादृशाः [त्वत्सदृशा मानिनो वीराः] ईदृशम् [एवंविधं] सुदुःसहम् [अत्यन्तमसह्यं] विकारं [पराभवं] प्राप्य, चेत् [यदि] रतिं [सन्तोषम्] अधिकुर्वते [स्वीकुर्वते] तदा, हन्त [हा] मनस्विता [अभिमानिता] निराश्रया [आश्रयहीना] सती [हता] नष्टा ॥

[समासः] धामवतां = धाम विद्यन्ते येषां ते धामवन्तः तेषां । पुरः-सराः = पुरः सरन्ति ते । यशोधनाः = यश एव धनं येषां ते । मनस्विता= मनस्विनो भावः मनस्विता ॥ ४३ ॥

[वाच्य०] पुरःसरैः. . .यशोधनैः. . .भवादृशैः. . .अधिक्रियते रतिः । निराश्रयया. . .हतया भूयते मनस्वितया ॥४३॥

[सरलार्थः] भवादृशाः तेजस्विनो यशोधनाः महापुरुषा अपि एवं प्रकारं पराभवं प्राप्य यदि सन्तोषमवलम्ब्य वर्त्तन्ते तदा अभिमानिता आश्रयाभावात् नश्यत्येव ॥४३॥

[हिन्दी] आप सदृश तेजस्वी, यशस्वी, महापुरुष यदि इस प्रकार पराजित होकर गम खाकर बैठें तो अभिमानिता आश्रय हीन होकर अवश्य नष्ट हो जायगी ॥४३॥

अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः सञ्जुहुधीह पावकम् ॥

[अन्वयः] अथ, निरस्तविक्रमः [सन्] चिराय, क्षमाम्, एव सुखस्य, साधनं; पर्य्येषि [तदा] लक्ष्मीपतिलक्ष्म, कार्मुकं, विहाय जटाधरः, सन्, इह, पावकं जुहुधि ॥ ४४ ॥

[ मल्लिनाथः ] अथेति । अथ पक्षान्तरे निरस्तविक्रमः सन् । चिराय चिरकालेनापि क्षमां क्षान्तिमेव । 'क्षितिक्षान्त्योः क्षमाः' इत्यमरः । सुखस्य साधनं पर्येष्यवगच्छसि तर्हि लक्ष्मीपतिलक्ष्म राजचिह्नं कार्मुकं विहाय । धरतीति धरः । पचाद्यच् । जटानां धरो जटाधरः सन्निह वने पावकं जुहुधि पावके होमं कुर्वित्यर्थः । अधिकरणे कर्मत्वोपचारः । विरक्तस्य किं धनु-षेत्यर्थः । 'हुझल्भ्यो हेर्धिः' ॥४४॥

[ सुबोधिनी ] अथ यदि पुनः, निरस्तविक्रमः [ पराक्रमहीनः सन् ] चिराय [ चिरकालेन ] क्षमाम् एव सुखस्य साधनं [ सुखकारणं ] पर्येषि [ अवगच्छसि ] तदा, लक्ष्मीपतिलक्ष्म [ राजचिन्हं ] कार्मुकं [ धनुः ] विहाय [परित्यज्य] जटाधरः सन्, इह [अस्मिन् वने] पावकम् [ अग्नि] जुहुधि [ हवनेन तर्पय ] ॥४४॥

( समासः ) निरस्तविक्रमः = निरस्तः विक्रमो येन सः । लक्ष्मीपति-लक्ष्म=लक्ष्मीपतेः=लक्ष्म लक्ष्मीपतिलक्ष्म । जटाधरः-धरतीति धरः, जटानां धरः, जटाधरः ॥४४॥

[वाच्य०] क्षमा...निरस्तविक्रमेण [ त्वया ] परीयते ।... जटाधरेण ( त्वया ) सता हूयताम्...पावकः ॥ ४४ ॥

[ सरलार्थः ] परन्तु यदि क्षमयैव सुखं भविष्यतीति निश्चिनोषि तदा धनुः परित्यज्य मुनिवेषधारी सन् इह तपस्तपस्व ॥४४॥

[ हिन्दी ] यदि आप क्षमा को ही स्थायी सुख का साधन समझते हैं तो धनुष त्याग कर मुनि वेष को धारण कर यहाँ तपस्या करें ॥४४॥

प्रतिज्ञाभङ्गाद् बिभेषि चेत् तदपि न किंचिदित्याह—

न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि ४

[ अन्वयः ] परेषु, निकृतिपरेषु [ सत्सु ] भूरिधाम्नः, ते, समयपरिरक्षणं, क्षमं, न । हि, विजयार्थिनः, क्षितीशाः, अरिषु, सोपधि, सन्धिदूषणानि, विदधति ॥ ४५ ॥

[ मल्लिनाथः ] नेति । परेषु शत्रुषु । निकृतिः परं प्रधानं येषु तेषु । तथोक्तेष्वपकारतत्परेषु सत्सु भूरिधाम्नो महौजसः प्रतिकारक्षमस्य ते तव समयस्त्रयोदशसंवत्सरान्वने वत्स्यामीत्येवंरूपा संवित् । 'समयाः शपथाचार-कालसिद्धान्तसंविदः' इत्यमरः । तस्य परिरक्षणं न क्षमं न युक्तम् । 'युक्ते क्षमं शक्ते हिते त्रिषु, इत्यमरः, हि यस्माद्विजयार्थिनो विजिगीषवः क्षितीशाः । अरिषु विषये सोपधि सकपटं यथा तथा । 'कपटोऽस्त्री व्याजदम्भो-पधयश्छद्म कैतवे, इत्यमरः । सन्धिदूषणानि विदधति केनचिद् व्याजेन दोषमापाद्य सन्धिं दूषयन्ति । विघटयन्तीत्यर्थः । शक्तस्य हि विजिगीषोः सर्वथा कार्यसाधनं प्रधानमन्यत्समयरक्षणादिकमशक्तस्येति भावः । अर्थान्त-रन्यासोऽलङ्कारः । पुष्पिताग्रावृत्तम् ॥४५॥

[ सुबोधिनी ] परेषु [ शत्रुषु ] निकृतिपरेषु [ अपकारतत्परेषु सत्सु ] भूरिधाम्नः [ महौजसः ] ते [ तव ] समयपरिरक्षणं [ त्रयोदशसंवत्सरान् वने वत्स्यामीति समयस्य प्रतिज्ञयाः परिरक्षणं परिपालनं ] क्षमम् [ उचितं ] न भवति, हि [ यतः ] विजयार्थिनः [ विजिगीषवः ] क्षितीशाः [ राजानः ] अरिषु [ शत्रुषु विषयेषु ] सोपधि [ सकपटं यथा स्यात् तथा ] सन्धिदूषणानि [ सन्धिदोषान् ] विदधति [ कुर्वन्ति ] दोषान् प्रदर्श्य सन्धिं विघटयन्तीत्यात्यर्थः ॥४५॥

[ समासः ] निकृतिः परं प्रधानं येषां तेषु । भूरिधाम्नः = भूरि धाम यस्य सः भूरिधामा तस्य । समयपरिरक्षणं=समयस्य परिरक्षणम् । क्षितीशाः = क्षितेरीशाः । सन्धिदूषणानि = सन्धेः दूषणानि सन्धिदूषणानि ॥४५॥

[ वाच्य० ]...समयपरिरक्षणेन क्षमेण [ भूयते ]...।...विजयार्थिभिः क्षितीशैः विधीयन्ते...॥४५॥

[ सरलार्थः ] अपकारिषु शत्रुषु प्रतिज्ञाभङ्गभयं न कर्त्तव्यम् । छलेन सन्धिदोषं प्रदर्श्य प्रतिज्ञाभङ्गः कर्त्तव्य एव । तत्र राज्ञां दोषो न जायते ॥४५॥

[ हिन्दी ) अपकारी शत्रुओं से प्रतिज्ञा भंग का भय नहीं करना चाहिये । छलद्वारा सन्धि में दोष दिखलाकर सन्धिपत्र की प्रतिज्ञा तोड़ डालनी चाहिये । इसमें राजा को किसी प्रकार का दोष नहीं लगता ॥४५॥

उक्तमर्थमाशीर्वादपूर्वकमुपसंहरति—

विधिसमयनियोगाद्दीप्तिसंहारजिह्मं
शिथिलवसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्योदीयमानं दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥४६॥

इति श्री-भारवि-दामोदरकविकृतौ किरातार्जुनीये प्रथमः सर्गः ।

[ अन्वयः ] लक्ष्मीः, विधिसमयनियोगात्, दीप्तिसंहारजिह्मं शिथिलवसुं, अगाधे, आपत्पयोधौ, मग्नं, रिपुतिमिरम्, उदस्य, उदीयमानं, त्वां, दिनादौ, दिनकृतम्, इव, भूयः, समभ्येतु ॥४६॥

[ मल्लिनाथः ] विधीति । विधिर्दैवम् । 'विधिर्विधाने दैवे च' इत्यमरः, समयः कालस्तयोर्नियोगान्नियमनाद्धेतोः । तयोर्दुरतिक्रमत्वादिति भावः । अगाधे दुस्तरे । आपत्पयोधिरिवेत्युपमितसमासः । दिनकृतमिवेति वक्ष्यमाणानुसारात्तस्मिन्नापत्पयोधौ मग्नम् । सूर्योऽपि सायं सागरे मज्जति परेद्युरुन्मज्जतीत्यागमः । दीप्तिः प्रताप आतपश्च तस्याः संहारेण जिह्ममप्रसन्नम् । शिथिलवसुं शिथिलघनम् अन्यत्र शिथिलरश्मिम् । वसुर्देवेऽग्नौ रश्मौ च वसु तोये धने मणौ' इति वैजयन्ती । 'शिथिलबलम्' इतिपाठे तूभयत्रापि शिथिलशक्तिकमित्यर्थः । रिपुस्तिमिरमिवेति रिपुतिमिरमुदस्य निरस्योदीयमानमुद्यन्तम् । 'ईङ् गतौ' धातोर्दैवादिकात्कर्तरि शानच् । त्वां दिनादौ दिनकृतमिव लक्ष्मीर्भूयः समभ्येतु भजतु । आशिषि लिङ् लोटौ' इति लोट् । चमत्कारकारितया मङ्गलाचरणरूपतया च सर्गान्त्यश्लोकेषु लक्ष्मीशब्दप्रयोगः । यथाह भगवान् भाष्यकारः—'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्त्यध्येतारश्च प्रवक्तारो भवन्ति इति । 'पूर्णोपमेयम् । मालिनीवृत्तम् 'सर्गान्तत्वाद्वृत्तभेदः । तथाह दण्डी– सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसंधिभिः । सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम्' ॥ इति ॥४६॥

अथ कविः काव्यवर्णनीयाख्यानपूर्वकंसर्गपरिसमाप्तिं कथयति इतीत्यादि । इतिशब्दः परिसमाप्तौ । भारविकृताविति कविनामकथनम् । महाकाव्य इति महच्छब्देन लक्षणसंपत्तिः सूचिता । किरातार्जुनीय इति काव्यवर्णनीययोः कथनम् । प्रथमः सर्गः । समाप्त इति शेषः । एवमुत्तरत्रापि द्रष्टव्यम् । किरातार्जुनीयम् । शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' इति द्वन्द्वाच्छप्रत्ययः । राघवपाण्डवीयमितिवत् । तथा ह्यर्जुन एवात्र नायकः । किरातस्तु तदुत्कर्षाय प्रतिभटतया वर्णितः । यथाह दण्डी—

'वंशवीर्यप्रतापादि वर्णयित्वा रिपोरपि ।
तज्जयान्नायकोत्कर्षकथनं च धिनोति नः ॥' इति

अथायं संग्रहः—

'नेता' मध्यमपाण्डवो भगवतो नारायणस्यांशज-
स्तस्योत्कर्षकृते त्ववर्ण्यततरां दिव्यः किरातः पुनः
शृङ्गारादिरसोऽङ्गमत्र विजयी वीरः प्रधानो रसः
शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम् ॥' इति

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमा-
ख्यायां प्रथमः सर्गः समाप्तः ।

---

[ सुबोधिनी ] लक्ष्मीः [ राजश्रीः, सूर्यपक्षे तेजःसम्पत् ] विधिसमयनियोगात् [ विधेर्दैवस्य समयस्य कालस्य च नियोगात् हेतोः ] दीप्तिसंहारजिह्मं [ दीप्तिः प्रतापः पक्षे आतपः तस्याः संहारेण नाशेन जिह्मम् अप्रसन्नं ] शिथिलवसुं [ शिथिलं क्षीणं वसु धनं पक्षे किरणः यस्य तम् ] अगाधे [ अपरिच्छिन्ने पक्षे अतले ] आपत्पयोधौ । आपत् पयोधिरिव तस्मिन्, विपत्सागरे पक्षे आपदिव पयोधिस्तस्मिन् ] मग्नं पतितं रिपुतिमिरं [ रिपुः तिमिरम् अन्धकार इव तम्, पक्षे रिपुरिव तिमिरं ] उदस्य [ निरस्य, दूरीकृत्य ] उदीयमानम् ( अभ्युदयमापद्यमानं ) त्वां, एदिनादौ ( प्रभाते ) दिनकृतं ( सूर्य्यम् ) इव, भूयः ( पुनः ) समभ्येतु ( भजतु ) ॥४६॥

[ समासः ] विधिसमयनियोगात् = विधिश्च समयश्च विधिसमयौ तयोर्नियोगस्तस्मात् । दीप्तिसंहारजिह्मं = दीप्तेः संहारः दीप्तिसंहारः, तेन जिह्मम् । शिथिलं वसु यस्य तं । आपत्पयोधौ = आपत्पयोधिरिवेत्यापत्पयोधिस्तस्मिन् । रिपुतिमिरं = रिपुः तिमिरमिवेति रिपुतिमिरं । दिनादौ-दिनस्य आदिः तस्मिन् ॥४६॥

[ वाच्य० ] ··· दीप्तिसंहारजिह्मः शिथिलवसुः = मग्नः ··· उदीयमानः ··· दिनकृत् ··· लक्ष्म्या त्वं सममीयस्व ··· ॥४६॥

[हिन्दी] सूर्य जिस प्रकार संध्यासमय प्रभाहीन होकर पश्चिम समुद्र में डूबता है और पुनः प्रातःकाल उदित होता है, उसी प्रकार आप भी दैववशात् काल की कुटिल गति से इस समय विपत् सागर में डूबे हैं अब शत्रुओं का नाश कर पुनः उस राज्य लक्ष्मी को प्राप्त करें ॥४६॥

इति श्रीपाठकोपाह्व गौरीनाथ शर्म्म विरचितया सुबोधिन्या-ख्यया व्याख्यया सरलार्थया च संवलितो महाकवि-भारवि–दामोदरविरचितः किरातार्जुनीय काव्यस्य प्रथमः सर्गः समाप्तः ।

विहितां प्रियया मनःप्रियामथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः ॥ १ ॥

[अन्वयः] अथ, वृकोदरः, प्रियया, विहितां, गिरं गरीयस-निश्चित्य, नृपम, उपपत्तिमत्, ऊर्जिताश्रयं, वचनम्, ऊचे ॥ १ ॥

[मल्लिनाथः] विहितामिति । अथ वृकोदरः भीमः, प्रियया द्रौपद्या । प्रियाग्रहणमस्या हितोपदेशतात्पर्यसूचनार्थम्। विहिताम्। अभिहितामित्यर्थः। विपूर्वस्य दधातेः क्रियासामान्यवाचिनो योग्यविशेषपर्यवसानात् । मनः प्रियामभिमतार्थयोगान्मनोहराम् । विशेषणद्वयेनापि गिरो ग्राह्यत्वमुक्तम् । गिरं गरीयसीं सारवत्तरां निश्चित्य नृपं धर्मराजमुपपत्तिमद्युक्तियुक्तमूर्जिता-श्रयमुदारार्थं वचनमूचे उक्तवान् । कर्तरि लिट् । 'ब्रुवो वचिरादेशः ॥। 'ब्रुविशासि—' इत्यादिना द्विकर्मकत्वम् 'अकथितंच' इति नृपस्य कर्मत्वम्

[सुबोधिनी] अथ [द्रौपदीवचनानन्तरं] वृकोदरः [भीमः] प्रियया [द्रौपद्या] विहितां [कथितां] गिरं [वाचं] गरीयसीं [सारवत्तरां] निश्चित्य [ स्थिरीकृत्य ] नृपं [ राजानं युधिष्ठिरम् ] उपपत्तिमत् [ युक्तियुक्तम् ] ऊर्जिताश्रयम् [ ऊर्जितं बलम् आश्रयो यस्य तत्, तेजोव्यञ्जकं ] वचनं [वाक्यम् ] ऊचे [उक्तवान्] ॥ १ ॥

[समासः] मनःप्रियाम् = मनसः प्रिया ताम् । गरीयसीं = अतिशयेन गुर्वी गरीयसी तां ॥ १ ॥

[वाच्यपरिवर्तनम] नृपः. . .वृकोदरेण [ऊचे] ॥ १ ॥

(सरलार्थः) अथ भीम आत्मनोऽभिमतं सारगर्भं द्रौपदीवचनमाकर्ण्य युधिष्ठिरं युक्तियुक्त तेजोव्यञ्जकं वचनमकथयत् ॥ १ ॥

[ हिन्दी ] इसके बाद, भीम ने द्रौपदी के इन वचनों को सुनकर युधिष्ठिर के प्रति युक्ति पूर्ण तथा तेजोमय वचन कहा ॥१॥

किं तद्वचनं तदाह—

यदवोचत वीक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा ।
अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥२॥

( अन्वयः ) मानिनी, स्नेहमयेन, चक्षुषा, परितः, वीक्ष्य, यत्, अवोचत, वागधिपस्य, अपि, दुर्वचं, तद्, वचनं, विस्मयं, विदधीत ॥ २ ॥

[मल्लिनाथः] यदिति । मानिनी क्षत्रियकुलाभिमानवती द्रौपदी स्नेहमयेन स्नेहप्रचुरेण । 'तत्प्रकृतवचने मयट्' । चक्षुषा । ऐतेनाप्तत्व-मुक्तम् । परितो वीक्ष्य समन्ततो विविच्य यद्वचनमवोचत । ब्रुवो वक्तेर्वा लुङ् । 'वच उम्' इत्युमागमः । वागधिपस्य बृहस्पतेरपि दुर्वचं वक्तुम-शक्यम् । शेषे षष्ठीयम्, न कृद्योगलक्षणा । अतो 'न लोक—' इत्यादिना षष्ठीप्रतिषेधो नास्ति । तद्वचनं विस्मयं विदधीत । सर्वस्यापीति शेषः । अथवा वागधिपस्यापि विस्मयं विदधीतेति सम्बन्धः । दुर्वचम् केनापीति शेषः । यतः स्त्रैणमपि शास्त्रमनुरुणद्धि हितं चानुबध्नाति । अतो विस्मय-करं ग्राह्यं चैतद्वचनमिति तात्पर्यार्थः ॥ २ ॥

[सुबोधिनी] मानिनी [क्षत्रियकुलाभिमानवती द्रौपदी] स्नेहमयेन [स्नेहप्रचुरेण, स्नेहपूर्णेन] चक्षुषा [ज्ञाननेत्रेण] परितः [समन्तात्, आत्म-परपक्षविषये] वीक्ष्य [विचार्य्य] यत् अवोचत [उक्तवती], वागधिपस्य [ बृहस्पतेः] अपि दुर्वचं [वक्तुमशक्यं] तत् वचनं [ वचः ] विस्मयम् [सर्वेषाम्, वागधिपस्य वा आश्चर्य्यं] विदधीत [कुर्य्यात्] ॥ २ ॥

[समासः] वागधिपस्य=अधिकृत्य पाति रक्षतीति अधिपः, वाचाम् अधिपः तस्य । "समन्ततस्तु परितः" इति, तथा "वचनं वचः" इति चामरः ॥ २ ॥

[वाच्यपरिवर्तनम्] यत् अवोचि...मानिन्या...दुर्वचनेन तेन विधीयेत विस्मयः ॥ २ ॥

[सरलार्थः] द्रौपदी सर्वतो विचार्य्य यद्वचनमुक्तवती, तद्वचनं बृह-स्पतिरपि वक्तुं न समर्थः, अतस्तस्यापि विस्मयं जनयेत् ॥ २ ॥

(हिन्दी) द्रौपदी सब प्रकार से विचार कर जो वचन बोली, वह बृहस्पति भी बोलने में असमर्थ है। अर्थात् उसके वचन से सभी चकित हो गये ॥ २ ॥

विस्मयकरत्वे हेतुमाह—

विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः ।
स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः ॥ ३ ॥

(अन्वयः) विषमः, अपि, नयः, पयसाम्, आशयः, इव, कृततीर्थः (सन्) विगाह्यते, तु, तत्र, सः, विशेषदुर्लभः, यः, कृत्यवर्त्म, सद्, उपन्यस्यति ॥ ३ ॥

[मल्लिनाथः] विषम इति । विषमोऽपि दुर्बोधोऽपि । अन्यत्र दुष्प्रवेशोऽपि । नयो नीतिशास्त्रम् । पयसामाशयो ह्रद इव । कृततीर्थः कृताभ्यासाद्युपायः सन् । "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इति विश्वः । अन्यत्र कृतजलावतारः सन् । 'योनौ जलावतारे च' इति हलायुधः । विगाह्यते गृह्यते प्रविश्यते च । किन्तु तत्र नये जलाशये च स तादृशः पुरुषो विशेषदुर्लभोऽत्यन्तदुर्लभो यः कृत्यं संधिविग्रहादिकार्यं स्नानादिकं च तस्य वर्त्म सत्साधु देशकालाद्यविरुद्धम् । यथा तथा । अन्यत्र गर्तग्राहपाषाणादिरहितं यथा तथोपन्यस्यत्युदाहरति । 'उपन्यासस्तु वाङ्मुखम् । उपोद्घात उदाहारः' इत्यमरः । यथा केचित्कृततीर्थे पयसि गम्भीरेऽपि प्रवेष्टारः सन्ति । तीर्थंकरस्तु विरलः । तद्वन्नीताव प गूढमपि तत्त्वं वक्तरि सति बोद्धारः सन्ति वक्ता तु न सुलभः । अत इयमपठितापि साधु वक्तीति युज्यते विस्मय इत्यर्थः ॥ ३ ॥

( सुबोधिनी ) विषमः ( दुर्बोधः, जलाशयपक्षे बन्धुरतीरः ) अपि नयः ( नीतिशास्त्रं ) पयसाम् आशयः (जलाशयः) इव, कृततीर्थः (कृतगुरुः सन्, पक्षे कृतावतरणस्थानः सन् ) विगाह्यते (गृह्यते पक्षे प्रविश्यते) तु (किन्तु) तत्र ( तस्मिन् नये, जलाशये च) सः (तादृशः पुरुषः) विशेषदुर्लभः (अत्यन्तदुर्लभः) यः, कृत्यवर्त्म (कृत्यस्य सन्धिविग्रहादिकार्य्यस्य,

पक्षे स्नानादिकार्य्यस्य वर्त्म उपायः) सत् (शोभनं यथा स्यात् तथा) उपन्यस्यति (उपदिशति, पक्षे करोति) ॥ ३ ॥

(समासः) कृततीर्थः=कृतं तीर्थं यस्मिन् सः। 'तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च। अवतारर्षिजुष्टाम्बु पात्रोपाध्यायमन्त्रिषु' इति मेदिनी, विशेषदुर्लभः=विशेषेण दुर्लभः। कृत्यस्य वर्त्म कृत्यवर्त्म तत् ॥ ३ ॥

( वाच्य० ) विषमम्...विगाह्यते ( सर्वैः ) नयम् कृततीर्थ... आशयम्। तेन...विशेषदुर्लभेन भूयते...उपन्यस्यते...येन ॥३॥

(सरलार्थः) यथा दुष्प्रवेशो जलाशयः केनचित् घट्टे कृते सति सर्वैः प्रविश्यते, किंतु घट्टकृत एव दुर्लभः, तथा उपदेष्टरि सति सुदुर्बोधं नीतिशास्त्रं सर्वैर्बुध्यते, किन्तु तत्र उपदेष्टैव दुर्लभः। असत्युपदेष्टरि यद् द्रौपदी ईदृशीं नीतिशास्त्रानुसारिणीं वाचमवोचत् इदमेवातीव विस्मयकरम् ॥

( हिन्दी ) जैसे सीढ़ी रहित जलाशय में सीढ़ियाँ बन जाने पर सभी सुख पूर्वक उसमें उतर सकते हैं उसी प्रकार लोग अभ्यास द्वारा कठिन से कठिन नीतिशास्त्र को जान सकते हैं, किन्तु ऐसा सिखलाने वाला कठिन है जो बनाये हुए इस सन्मार्ग से स्वयं भी चलता हो ॥३॥

अथ द्रौपदीवचनस्य श्रेष्ठत्वमाह—

परिणामसुखे गरीयसि व्यथकेऽस्मिन्वचसि क्षतौजसाम्।
अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः ॥ ४ ॥

( अन्वयः ) परिणामसुखे, गरीयसि, क्षतौजसां, व्यथके अल्पीयसि अस्मिन् वचसि अतिवीर्य्यवति भेषजे इव बहुः गुणः दृश्यते ॥४॥

(मल्लिनाथः) परिणामेति। परिणामः फलकालः परिपाकावस्था च। तत्र सुखे हिते। 'शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च' इति सुखशब्दस्य विशेष्यलिङ्गत्वम्। गरीयसि भूयिष्ठे श्रेष्ठे च। क्षतौजसामुभयत्रापि क्षीणशक्तीनां व्यथके युद्धोपोद्बलकत्वाद्भयङ्करे। अन्यत्रादौ संशया-

दिदुःखजनके । अल्पीयस्यल्पाक्षरेऽल्पमात्रे, उक्तं च—'स्वल्पा च मात्रा बहुलो गुणश्च' इति । अस्मिन् वचसि द्रौपदीवाक्ये अतिवीर्यवत्यन्तसामर्थ्यवति भेषज औषध इव । 'भेषजौषधभैषज्यम्' इत्यमरः । बहुरनेको गुणो मानत्राणराज्यलाभादिरारोग्यबलपोषादिश्च दृश्यते । अतो ग्राह्यमस्या वचनमिति भावः ॥ ४ ॥

(सुबोधिनी) परिणामसुखे (अन्ते हितकरे) गरीयसि (श्रेष्ठे) क्षतौजसां (क्षीणशक्तीनां) व्यथके (खेदजनके) अल्पीयसि (स्वल्पमात्रे च) अस्मिन्वचसि (द्रौपदीवाक्ये) अतिवीर्य्यवति (अत्यन्तसामर्थ्यशालिनि) भेषजे (औषधे) इव, बहुः (अनेकः) गुणः, दृश्यते (मया अनुभूयते) ॥४॥

(वाच्यपरिवर्तनम्)...बहुम्...पश्यति...गुणम् ॥ ४ ॥

(सरलार्थः) उत्कृष्टमौषधं स्वल्पमपि यथा बहुगुणकं भवति तथा द्रौपदीवचनं स्वल्पमपि सारवत् लक्ष्यते ॥ ४ ॥

(हिन्दी) उत्तम औषधि थोड़ी होने पर भी जिस प्रकार बहुत गुणकारी होती है उसी प्रकार द्रौपदी के वचन संक्षेप में होने पर भी सारगर्भित हैं ॥ ४ ॥

सत्यमेवं तथापि नायुक्ततया मह्यं न रोचते इति चेत् तत्राह—

इयमिष्टगुणाय रोचतां रुचिरार्था भवतेऽपि भारती ।
ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः ॥ ५ ॥

(अन्वयः) रुचिरार्था, इयं, भारती इष्टगुणाय, भवते, अपि, रोचताम्। गुणगृह्याः, विपश्चितः, वचने, वक्तृविशेषनिःस्पृहा ननु॥

(मल्लिनाथः) इयमिति । रुचिरार्था हितार्थसम्पन्नेति रुचिहेतूक्तिः । इयं भारती द्रौपदीवाक्यमिष्टगुणाय । गुणग्राहिण इत्यर्थः । भवते तुभ्यमपि । 'रुच्यर्थानां प्रीयमाणः' इति सम्प्रदानत्वाच्चतुर्थी । रोचतां स्वदताम् । विध्यर्थे लाट् हितवचने बलादपीच्छां कुर्यादौषधवदिति भावः । तथापि स्त्रैणे वचसि का श्रद्धा तत्राह—नन्विति । गुणानां गृह्या गुणगृह्याः । गुणपक्षपातिन इत्यर्थः । 'पदा स्वैरिबाह्यपक्ष्येषु च' इति ग्रहेः क्यप् ।

विपश्चितो विद्वांसः 'विद्वान्विपश्चिद्दोषज्ञः, इत्यमरः। वचने विषये वक्तृ-विशेषे स्त्रीपुंसादिलक्षणे निःस्पृहा ननु निरास्थाः खलु 'बालादपि सुभाषितं ग्राह्यम्' इति न्यायादिति भावः ॥ ५ ॥

(सुबोधिनी) रुचिरार्था (मम रुचिकरार्थसम्पन्ना) इयं भारती (द्रौपद्या उक्तिः) इष्टगुणाय (गुणग्राहिणे) भवते (तुभ्यम्) अपि, रोचतां (स्वदताम्, तवापि रुचिकरी भवतु) गुणगृह्याः (गुणपक्षपातिनः) विपश्चितः (विद्वांसः) वचने (वाक्यविषये) वक्तृविशेषनिःस्पृहाः ( वक्तॄणां विशेषे स्त्रीपुंसादि-लक्षणरूपभेदे) निःस्पृहाः (निरास्थाः) ननु (खलु भवन्ति) ॥ ५ ॥

( वाच्य० ) रुच्यतां रुचिरार्थया...भारत्या।...वक्तृविशेष-निःस्पृहैः गृणगृह्यैः भूयते...विपश्चिद्भिः ॥ ५ ॥

( सरलार्थः ) द्रौपद्या इदं वचनं मह्यं रोचते, गुणपक्षपातिने तुभ्य-मपि रोचताम्। यतः पण्डिताः, स्त्री इयं, पुमानयमिति कृत्वा वक्तृवि-शेषं न लक्षयन्ति, तदीयवचनस्य गुणमेव गृह्णन्ति ॥ ५ ॥

( हिन्दी ) सारगर्भित द्रौपदीकी बातें, गुण को जानने वाले आपको अवश्य पसन्द आई होंगी। क्योंकि पण्डित लोग, यह स्त्री है यह पुरुष है, इस प्रकार भेदभाव मन में नहीं लाया करते। वे केवल वाक्यों के गुणों को ग्रहण करते हैं ॥ ५ ॥

सम्प्रति स्वयमेव नृपमुपालभते—

चतसृष्वपि ते विवेकिनी नृप विद्यासु निरूढिमागता।
कथमेत्य मतिर्विपर्ययं करिणी पङ्कमिवावसीदति ॥ ६ ॥

( अन्वयः ) हे नृप ! चतसृषु, अपि, विद्यासु, निरूढिम्, आगता, विवेकिनी, ते, मतिः, कथं, करिणी, पङ्कम्, इव, विपर्य्ययम् एत्य अवसीदति ॥ ६ ॥

(मल्लिनाथः) चतसृष्विति। हे नृप !, चतसृष्वपि विद्यास्वान्वी-क्षिक्यादिषु। 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती। विद्याश्च ताश्चतस्रस्तु लोकसंस्थितिहेतवः' इति कामन्दकः। निरूढिमागता प्रसिद्धिं

गता अत एव विवेकिनी सदसद्विवेकवती । यथाह मनुः—'आन्वीक्षिक्यां तु विज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ ॥' इति ते मतिः कथं करिणी पङ्कमिव विपर्ययं वैपरीत्यमविवेकरूपमेत्यावसीदति नश्यति । तन्न युक्तमिति भावः ॥ ६ ॥

(सुबोधिनी) हे नृप ! ( हे राजन् ! ) चतसृषु ( आन्वीक्षिकीत्रयी वार्त्ता दण्डनीतिश्चेति चतुःसंख्याकासु) अपि विद्यासु, निरूढिं (प्रसिद्धिम्) आगता प्राप्ता) अतव ववेकिनी (सदसद्विवेकवति) ते (तव) मतिः (बुद्धिः ) कथं, करिणी ( हस्तिनी ) पङ्कम् इव ( पङ्कं यथा, ) विपर्य्ययं वैपरीत्यम्, अविवेकित्वम् ) एत्य ( प्राप्य ) अवसीदति (नश्यति) ॥६॥

( वाच्यपरिवर्तनम् ) विवेकिन्या...आगतया...मत्या...करिण्या...अवसद्यते ॥ ६ ॥

(सरलार्थः) विदुषोऽपि तथा विवेकवतोऽपि तव कथमेवं बुद्धिभ्रंशः साम्प्रतं संवृत्तः, येनेदृक् अवसन्नोऽसि ॥ ६ ॥

(हिन्दी) विद्वान् तथा विचारवान् होते हुए भी आपको इस समय बुद्धिभ्रम हो गया है, जिससे हम लोग इस अवस्था को प्राप्त हुए हैं ॥ ६ ॥

किमस्माकं कष्टं जातं येनैवं मामुपालभते इति चेत्तत्राह—

विधुरं किमतःपरं परैरवगीतां गमिते दशामिमाम् ।
अवसीदति यत्सुरैरपि त्वयि संभावितवृत्ति पौरुषम् ॥

( अन्वयः ) त्वयि, परैः, इमाम्, अवगीतां, दशां, गमिते (सति) सुरैः, अपि, सम्भावितवृत्ति, पौरुषम्, अवसीदति, यत्, अतः,परं, किं, विधुरम् ॥ ७ ॥

(मल्लिनाथः) विधुरमिति । त्वयि परैः शत्रुभिरिमामीदृशीमवगीतां गर्हिताम् । अवगीतं तु निर्वादे मुहुर्दृष्टे च गर्हिते इति विश्वः । दशां गमिते प्रापते सति । सरैरपि सम्भावितवृत्ति वहुकृतप्रसारम् । अथवा निश्चितसद्भावम् पौरुषं पुरुषकारः युवादीत्वदण्प्रत्यय ।अवसीदति नश्यति । अतःपरम् अतोऽन्यदधीकं किं विधुरं किं कष्टम् । न किञ्चिदित्यर्थः । 'वि

'विधुरं प्रत्यवाये स्यात्कष्टविश्लेषयोरपि' इति वैजयन्ती । अस्तीति शेषः । 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' इति भाष्यकारः । भवतीति लटः पूर्वाचार्याणां संज्ञा । यद्वा पुरुषाधिकारस्य दुर्दशा सा च शत्रुकृता । तदुपरि महत्कष्टं तच्च त्वदुपेक्षयेत्युपालम्भस इत्यर्थः ॥ ७ ॥

( सुबोधिनी ) त्वयि, परैः (शत्रुभिः) इमाम् ( ईदृशीम् ) अवगीतां (निन्दितां) दशाम् (अवस्थां) गमिते ( प्रापिते सति ) सुरैः (देवैः) अपि सम्भावितवृत्ति (बहुमतप्रसारं) पौरुषं (पुरुषकारः) अवसीदति (नश्यति) इति—यत्, अतः परम् ( इतोऽधिकं ) किं विधुरं ( कष्टम् ) अस्ति, न किञ्चिदित्यर्थः ॥ ७ ॥

(समासः) सम्भावितवृत्ति = सम्भाविता वृत्तिर्यस्य तत् ॥ ७ ॥

( वाच्य० ) विधुरेण भूयते केन...परेण...। अवसद्यते सम्भावितवृत्तिना पौरुषेण ॥ ७ ॥

( सरलार्थः ) शत्रुभिरीदृशीं दुर्दशां प्रापितस्य तव देवैरपि बहुमतं पौरुषं यत् नष्टमतोऽधिकं कष्टं किमन्यदस्ति, इदमेव महाकष्टम् ॥ ७ ॥

(हिन्दी) देवताओं द्वारा प्रशंसित आपका यश इस समय शत्रु द्वारा की गई इस दुरवस्था से नष्ट हो गया है। अब इससे बढ़ कर और कष्ट की क्या बात हो सकती है ॥ ७ ॥

उपेक्षाकालोऽयमिति मत्वा उपेक्षे इति चेत् नायमुपेक्षाकाल इति श्लोकद्वयेन विविनक्ति—

द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः सुमर्षणः ।
न महानपि भूतिमिच्छता फलसंपत्प्रवणः परिक्षयः ॥ ८ ॥

(अन्वयः) भूतिम्, इच्छता सुमेधसा, गुरुः, अस्वन्ततरः, द्विषताम्, उदयः, सुमर्षणः । महान्, अपि फलसम्पत्प्रवणः, परिक्षयः न (सुमर्षणः) ।

(मल्लिनाथः) द्विषतामिति । भूतिमुदयमिच्छता । शोभना मेधा यस्य तेन सुमेधसा सुधिया । 'नित्यमसिच्प्रजामेधयोः' इत्यसिच्प्रत्ययः । गुरुर्म-

ह्रासप्यस्वन्ततरोऽत्यन्तः दुरन्तः, क्षयोन्मुख इत्यर्थः, द्विषतामुदयो वृद्धिः । सुखेन मृष्यत इति सुमर्षणः सुसहः । उपेक्ष्य इत्यर्थः । स्वन्तश्चेद् दुर्मर्षण इति भावः । 'भाषायां शासि'—इत्यादिना खलर्थे युच्प्रत्ययः । महानपि फलसम्पत्प्रवणः फलसंपदुन्मुखः । 'प्रनिरन्तर'—इत्यादिना णत्वम् । परिक्षयो न सुमर्षणः । नोपेक्ष्य इत्यर्थः । अन्यथा तूपेक्ष्य इति भावः । नह्युदय एव प्रतिकार्यो न च क्षय इत्येवोपेक्ष्यः । किन्तु स्वन्तत्वास्वन्तत्वाभ्यामुभावपि प्रतिकार्यावुपेक्ष्यौ च भवत इत्यर्थः ॥ ८ ॥

(सुबोधिनी) भूतिम् (उदयम्) इच्छता (अभिलषता) सुमेधसा (सुबुद्धिना पुरुषेण) गुरुः (महान् अपि) अस्वन्ततरः (क्षयोन्मुखः) द्विषतां (शत्रूणाम्) उदयः (वृद्धिः) सुमर्षणः (सुसहः; उपेक्ष्यः) । (परन्तु) महान् (प्रभूतः) अपि, फलसम्पत्प्रवणः (महाफलोन्मुखः) परिक्षयः (द्विषतां ह्रासः) न (सुमर्षणः, न उपेक्ष्यः) ॥ ८ ॥

(समासः) सुमेधसा = शोभना मेधा यस्य तेन, अस्वन्ततरः = शोभनः अन्तो यस्य स स्वन्तः, न स्वन्तः अस्वन्तः, अतिशयेन अस्वन्तः अस्वन्ततरः । फलसम्पत्प्रवणः = फलस्य सम्पत् (समृद्धिः) तस्यां प्रवणः ॥ ८ ॥

(वाच्य०)···उदयेन गुरुणा अस्वन्ततरेण सुमर्षणेन भूयते । महता फलसम्पत्प्रवणेन परिक्षयेण न सुमर्षणेन भूयते ॥ ८ ॥

(सरलार्थः) परिणामे क्षयो भविष्यतीति निश्चितं चेत् बुध्यते तदा शत्रूणां महानपि अभ्युदयः कालप्रतीक्षया उपेक्ष्यः । परिणामे महाफलं भविष्यतीति चेत् बुध्यते तदा शत्रूणां परिक्षयेऽपि उपेक्षा न कार्य्येति नीतिशास्त्रोपदेशः । दुर्योधनस्याभ्युदयः परिणामे महाफलजनको भविष्यतीति यतो बुध्यते ततस्तत्र भवता उपेक्षा न कर्त्तव्या, आशु प्रतिकार एव कर्त्तव्यः ॥ ८ ॥

(हिन्दी) अपना जय चाहने वाले विद्वान् ने परिणाम में नाश होने वाले शत्रु के वर्तमान अभ्युदय को सहन करना चाहिये

किन्तु परिणाम में अभ्युदय को प्राप्त होने वाले शत्रु की वर्तमान हानि न होने देनी चाहिये ॥ ८ ॥

अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः ।
क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥ ९ ॥

( अन्वयः ) कृती, परस्य, क्षययुक्तिम्, अचिरेण, भूयसीम्, आत्मनः, विपरीतां, च, विगणय्य, उपेक्षते, अन्यथा तत्प्रतिकारं कुरुते ॥ ९ ॥

(मल्लिनाथः) अचिरेणेति । कृतमनेनेति कृती । कुशल इत्यर्थः । 'इष्टादिभ्यश्च' इतीनिप्रत्ययः, परस्य शत्रोः क्षययुक्तिं क्षययोगमचिरेणाशुभाविनीं भूयसीं दुरन्तां च, तथात्मनः क्षययुक्तिं विपरीतां चिरभाविनीं च विगणय्य विचार्य । 'ल्यपि लघुपूर्वात्' इत्ययादेशः । उपेक्षते । अन्यथोक्तवैपरीत्ये । परस्य क्षययुक्तावल्पीयस्याम्, स्वस्य भूयस्यां च सत्यामित्यर्थः, तत्प्रतिकारं तस्याः क्षययुक्तेः प्रतिकारमचिरेणाशु कुरुते । एवं सति यदा शत्रोरभ्युदयः स्वस्य चातिपरिक्षयो यथास्माकं तदा किं वक्तव्यम् । सद्यः प्रतिकुरुत इत्यर्थात्सिद्धमनुसन्धेयम् ॥ ९ ॥

(सुबोधिनी) कृती (निपुणो जनः) परस्य ( शत्रोः ) क्षययुक्तिं ( क्षययोगम् ) अचिरेण (आशु भाविनीं) तथा भूयसीम् (प्रभूततराम्) आत्मनः (स्वस्य विपरीतां (विपर्य्यस्तां, चिरेण भाविनीं तथा अल्पीयसीं) च विगणय्य (विचार्य्य) उपेक्षते ( प्रतिकारपराङ् मुखो भवति ) अन्यथा (तद्वैपरीत्ये सति—परस्य क्षययुक्तौ चिरेण अल्पीयस्याम् आत्मनश्च अचिरेण भूयस्यां सत्यां) तत्प्रतिकारं (तस्याः क्षययुक्तेः चिकित्सां) कुरुते (विदधाति)

( समासः ) क्षययुक्तिम्-क्षयस्य युक्तिः ताम् । तत्प्रतिकारं ( तस्याः प्रतिकारः तत्प्रतिकारस्तं तत्प्रतिकारम् ॥ ९ ॥

(वाच्य०)...क्षययुक्तिः उपेक्ष्यते कृतिना । क्रियते तत्प्रतिकारः ॥

(सरलार्थः) शत्रोः क्षयः आशु भूयान् भविष्यति आत्मनस्तु विलम्बेन अल्पीयान् भविष्यतीति बुद्ध्वा उपेक्षणीयः । परन्तु आत्मनः क्षयः आशु

भूयान् भविष्यति परस्य तु विलम्बेन अल्पीयान् भविष्यतीति बुद्ध्वा क्षयस्य प्रतिकारः कर्त्तव्यः प्रस्तुते विषये दुर्य्योधनस्य क्षयो यदि भवेत् तदा विलंबेनाल्पीयान् भविष्यति, भवतस्तु शीघ्रं भूयान् भविष्यतीत्यतः क्षयस्यास्य प्रतिकारस्त्वया नूनं कर्त्तव्य एव ॥ ९ ॥

(हिन्दी) शत्रु का क्षय शीघ्र और विशेष होगा और अपना विलंव से तथा साधारण होगा ऐसा जानकर उपेक्षा करनी चाहिये, परन्तु अपना नाश शीघ्र और विशेष होगा और शत्रु का विलंब से तथा साधारण होगा ऐसा समझ कर उस नाश का बदला लेने का प्रबन्ध शीघ्र करना चाहिये ॥ ९ ॥

उपेक्षायामनिष्टमाचष्टे—

अनुपालयतामुदेष्यतीं प्रभुशक्तिं द्विषतामनीहया ।
अपयान्त्यचिरान् महीभुजां जननिर्वादभयादिव श्रियः ॥१०॥

(अन्वयः) उदेष्यतीं, द्विषतां, प्रभुशक्तिम्, अनीहया, अनुपालयतां, महीभुजां, श्रियः, जननिर्वादभयात्, इव अचिरात् अपयान्ति ॥१०॥

(मल्लिनाथः) अनुपालयतामिति । उदेष्यतीं वर्धिष्यमाणाम् । 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः । द्विषतां प्रभुशक्तिं कोशदण्डजं तेजः 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इत्यमरः । अनीहयानुत्साहेनानुपालयतामुपेक्षमाणानां महीभुजां श्रियः सम्पदो जननिर्वादभयान्निकृष्टपुरुषानुरागोत्थलोकापवादभयादिवेति हेतूत्प्रेक्षा । अचिरादपयान्त्यपसरन्ति । यथाह कामन्दकः—स्त्रीभिः षण्ढ इव श्रीभिरलसः परिभूयते' इति । अतः पराक्रमितव्यमित्यर्थः ॥ १० ॥

( सुबोधिनी ) उदेष्यतीं (वर्द्धिष्यमाणां) द्विषतां शत्रूणां) प्रभुशक्तिं (कोशदण्डजं तेजः) अनीहया (अनुत्साहेन) अनुपालयताम् ( उपेक्षमाणानां) महीभुजां (राज्ञां) श्रियः (सम्पदः) जननिर्वादभयात् (कापुरुषानुरागजन्यलोकापवादभयात्) इव, अचिरात् ( शीघ्रम् ) अपयान्ति ( अपगच्छन्ति ) ॥ १० ॥

(समासः) जननिर्वादभयात्=जनानां निर्वादः, तस्मात् भयं तस्मात्, हेतौ पञ्चमी। महीभुजां=महीं भुञ्जन्तीति महीभुजस्तेषाम् ॥१०॥

(वाच्य०)...अपयायते...श्रीभिः ॥ १० ॥

(सरलार्थः) ये राजानः विना चेष्टया शत्रूणाम् अभ्युदयम् उपेक्षन्ते, ते सम्पदं कदापि न लभन्ते ॥ १० ॥

(हिन्दी) जो राजा बिना चेष्टा किये ही शत्रुओं की उन्नति की उपेक्षा करते हैं वे सम्पत्ति कभी भी नहीं पाते ॥१०॥

परिक्षीणोऽहं कथं प्रबलेन स्पर्द्धे इति चेत् तत्राह—

क्षययुक्तमपि स्वभावजं दधतं धाम शिवं समृद्धये ।
प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥११॥

(अन्वयः) क्षययुक्तम्, अपि, स्वभावजं, शिवं, धाम, दधतं, समृद्धये, उत्थितं, अनपायम्, नृपं, प्रजाः, प्रतिपच्चन्द्रम्, इव, प्रणमन्ति, ॥११॥

(मल्लिनाथः) क्षयेति। क्षययुक्तमपि तथा क्षीणमपि सन्तं स्वभावजं सहजं शिवं सर्वलोकाह्लादकं धाम क्षात्रं तेजः प्रकाशं च दधतं समृद्धये वृद्ध्यर्थमुत्थितमुद्युक्तम् वर्धिष्णुमित्यर्थः। अन्यत्र—उत्थितं उदितमत एव अनपायम् अविनाशिनं नृपं प्रजाः। प्रतिपच्चन्द्रं द्वितीयाचन्द्रमिवेत्यर्थः। प्रतिपच्छब्देन द्वितीयाग्रहणम्। प्रतिपदि तस्यादृश्यत्वादिति। प्रणमन्ति। प्रह्वभावेन वर्तन्त इति भावः। चन्द्रं तु नमस्कुर्वन्ति। क्षीणस्याप्युत्साहः कार्यसिद्धेर्निदानमित्यर्थः। 'जयं हि सततोत्साही दुर्बलोऽपि समश्नुते' इति कामन्दकः ॥ ११ ॥

(सुबोधिनी) क्षययुक्तम् ( परिक्षीणं सन्तम् ) अपि स्वभावजं (सहजं) शिवं, (सर्वलोकसुखकरं) धाम (तेजः) दधतं (धारयन्तं) समृद्धये (वृद्ध्यर्थम्) अनपायम् (आलस्यादिदोषरहितं यथा स्यात् तथा, चन्द्रपक्षे मेघाद्यन्तरायशून्यं यथा स्यात् तथा) उत्थितम् ( उद्युक्तं, पक्षे प्रथमोदितं ) चन्द्रम् (इव प्रणमन्ति नम्रभावेन अनुगच्छन्ति, पक्षे नमस्कुर्वन्ति) ॥११॥

( समासः ) क्षययुक्तम् = क्षयेण युक्तः तम् । स्वभावजं = स्वभावात् जातम् प्रतिपदश्चन्द्रः प्रतिपच्चन्द्रः तम् ॥ ११ ॥

(वाच्यपरिवर्तनम्'''दधत् उत्थितः अनपायः प्रणम्यते ''प्रति-पच्चन्द्रः'''इव प्रजाभिः नृपः ॥११॥

(सरलार्थः) परिक्षीणोऽपि प्रजारञ्जनो राजा यदि राज्यलाभार्थं प्रयतते, तदा सर्वाः प्रजास्तस्य साहाय्यम् आचरन्ति ॥११॥

(हिन्दी) बलहीन किन्तु प्रजा को प्रसन्न रखने वाला राजा यदि राज्य के लाभ के लिये प्रयत्न करता है तो सभी प्रजा उसकी सहायक होती है जैसे द्वितीया के क्षीण चन्द्र को भी लोग प्रसन्न होकर प्रणाम द्वारा अपनी हार्दिक सहायता प्रगट करते हैं ॥११॥

ननु प्रभुशक्तिशून्यस्योत्साहः कुत्रोपयुज्यते इत्यत्राह—

प्रभवः खलु कोशदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः ।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥१२॥

(अन्वयः) कृतपञ्चाङ्गविनिर्णयः नयः कोशदण्डयोः प्रभवः, खलु, सः, विधेयपदेषु, लोकः, नियतिम्, इव, दक्षताम्, अनुरुध्यते॥

(मल्लिनाथः) प्रभव इति । कर्म्मणामारम्भोपायः पुरुषद्रव्यसम्पद्देश-कालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गानि । यथाह काम-न्दकः—'सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥' इति पञ्चानामङ्गानां विनिर्णयः पञ्चांगविनिर्णयः 'तद्धितार्थ'–इत्यादिनोत्तरपदसमासः । कृतः पञ्चाङ्गविनिर्णयो यस्य येन वा स तथोक्तः नयो नीतिः । मन्त्र इति यावत् । कोशोऽर्थराशिः । कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः । 'दण्डश्चतुरङ्गसैन्यम् । दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे यमे । यात्रायां सैन्यभेदे' इति वैजयन्ती । तयोः । कोशदण्डयोः । प्रभुशक्तेरित्यर्थः । प्रभवत्यस्मादिति प्रभवः कारणम् । 'ऋदोरप्' । स नयो विधेयपदेषु कार्यवस्तुषु । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । दक्षतां क्षिप्रकारित्वम् ।

उत्साहमित्यर्थः । लोकः कृष्यादिप्रवृत्तो जनः । नियतिं दैवमिव । 'नियति-र्नियमे दैवे' इति विश्वः । अनुरुध्यतेऽनुसरति । रुधेर्दैवादिकात्कर्तरि लट् । मन्त्रस्यापि मूलमुत्साहस्तन्मूलायाः प्रभुशक्तेर्मूलमिति किमु वक्तव्यम् । अतः स एवाश्रयणीयो यतो नक्तन्दिवं मन्त्रयतस्तस्यापि प्रभोर्निरुत्साहस्य न किञ्चित्सिद्ध्यतीति ॥ १२ ॥

( सुबोधिनी ) कृतपञ्चाङ्गविनिर्णयः ( 'सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते'' इत्युक्तानां पञ्चा-नाम् अङ्गानाम् विनिर्णयः पञ्चाङ्गविनिर्णयः, कृतः पञ्चाङ्गविनिर्णयः यस्य सः) नयः (नीतिः) कोशदण्डयोः ( कोशस्य अर्थराशेः, दण्डस्य चतुरङ्ग-सैन्यस्य च ) प्रभवः (कारणं भवति) । सः ( तादृशो नयः ) विधेयपदेषु ( कार्य्यवस्तुषु ) लोकः ( कृष्यादिप्रवृत्तो जनः ) नियतिं ( दैवम् ) इव, दक्षतां ( निपुणताम् उत्साहम् ) अनुरुध्यते (अनुसरति) ॥ १२ ॥

(समासः) कोशदण्डयोः = कोशश्च दण्डश्च कोशदण्डौ; तयोः । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । विधेयान्येव पदानि तेषु ॥

(वाच्य०)प्रभवेण...भूयते कृतपञ्चाङ्गविनिर्णयेन नयेन । तेन.. दक्षता नियतिः लोकेन ॥ १२ ॥

(सरलार्थः) पञ्चाङ्गनिर्णयं कृत्वा प्रवर्त्तितायां नीतौ अर्थराशेः सैन्यसङ्ग्रहस्य च अभावो न भवति । सा तु नीतिः कर्त्तव्यकर्म्मसु दक्षतामपेक्षते । एवं बुद्ध्वा भवता पराक्रमितव्यम् ॥ १२ ॥

(हिन्दी) सहाय और साधनादि पंचांग द्वारा निर्णय करके नीति से चलने वाले राजा को द्रव्य और सेना का अभाव नहीं रहता। इस तरहकी निति राजाको कर्तव्य पथ में निपुण बनाती है।।

पुरुषकार एव सर्वथा प्रधानमित्याह—

अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः ।
विनिपातनिवर्तनक्षमं मतमालम्बनमात्मपौरुषम् ॥१३॥

(अन्वयः) अभिमानवतः, प्रियमुच्चैः, पदम्, आरुरुक्षतः,मन-स्विनः, आत्मपौरुषं, विनिपातनिवर्त्तनक्षमम्, आलम्बनं, मतम् ॥

[मल्लिनाथः] अभिमानवत इति । अभिमानवतो मानधनस्य प्रियमिष्टमुच्चैरुन्नतं पदं स्थानं राज्यादिकमारुरुक्षत आरोढुमिच्छतः प्राप्तुकामस्य मनस्विनो धीरस्यात्मपौरुषं स्वपुरुषकार एव विनिपातनिवर्तनक्षममनर्थप्रतिकारसमर्थमालम्बनं सहकारि मतमिष्टम् । यथा कस्यचित्तुङ्गमारोहतः किञ्चित्पतनप्रतिबन्धकमनुचरहस्तादिकमालम्बनं तद्वदिति ध्वनिः । किं पौरुषादन्यैः सहायैः शूराणामिति भावः ॥ १३ ॥

( सुबोधिनी ) अभिमानवतः (मानधनस्य) प्रियम् (अभीष्टम्) उच्चैः (उन्नतं) पदं (राज्यादिकं स्थानम् ) आरुरुक्षतः ( आरोढुमिच्छतः ) मनस्विनः (धीरस्य जनस्य) आत्मपौरुषं (स्वपुरुषकार एव) विनिपातनिवर्त्तनक्षमम् (अनर्थप्रतिकारसमर्थम्) आलम्बनं (साहाय्यकारि) मतम् (इष्टम्)

( समासः ) अभिमानवतः = अभिमानोऽस्यास्तीति तस्य । विनिपातनिवर्त्तनक्षमम् = विनिपातस्य निवर्त्तनं, तस्मिन् क्षमम् । मनस्विनः=प्रशस्तं मनः अस्ति अस्य तस्य । आत्मपौरुषं—आत्मनः पौरुषम् आत्मपौरुषम् ॥

(वाच्य०) ...पौरुषेण क्षमेण आलम्बनेन मतेन (भूयते)॥१३॥

(सरलार्थः)यथा कस्यचित् पुरुषस्य उच्चस्थानम् आरोहतः पतननिवृत्तये अनुचरहस्तादिकम् आलम्बनं भवति, तथा राज्यपदमारोढुमिच्छतः राज्ञः विपन्निवारणाय निजपुरुषकार एव आलम्बनमिति नीतिवेदिनां मतम् । पुरुषकारपरायणस्य पतनं न भवतीत्यतः सर्वथा पौरुषमेवावलम्बनीयम् ॥

( हिन्दी ) अभिमानी और ऊँचे पद पर चढ़ने की इच्छा करने वाला राजा अपने ऊपर आई हुई विपत्ति को दूर करने के लिये पौरुष की ही सहायता लेता है ॥ १३ ॥

पौरुषानङ्गीकारे दोषमाह—

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ १४ ॥

( अन्वयः ) अविक्रमं, विपदः, अभिभवन्ति, आपदुपेतम्, आयतिः, रहयति, निरायतेः, लघुता, नियता, अगरीयान्, नृपश्रियः, पदं न ॥ १४ ॥

(मल्लिनाथः) विपद इति । अविक्रमं पौरुषहीनं विपदोऽभिभवन्त्याक्रामन्ति । आपदुपेतं विपन्नमायतिरुत्तरकालः । 'उत्तरः काल आयतिः' इत्यमरः, रहयति त्यजति । निरायतेः आसन्नक्षयस्येत्यर्थः । लघुताऽगौरवं नियताऽवश्यम्भाविनी न कश्चिदेनमाद्रियत इत्यर्थः । अगरीयांल्लघीयान्नृपश्रियो राजलक्ष्म्याः पदमास्पदं न भवति । यद्वा नृपेति पदच्छेदः । तस्मात्पौरुषं कर्तव्यमेवेत्यर्थः । अत्र पूर्वपूर्वस्याविक्रमत्वादुत्तरोत्तरं विपदादिकं प्रति कारणत्वात्कारणमालाख्योऽलङ्कारः । तथा च सूत्रम्—'पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमाला' इति ॥ १४ ॥

( सुबोधिनी ) अविक्रमं ( पुरुषकारहीनं जनं ) विपदः, अभिभवन्ति (आक्रामन्ति) आपदुपेतं (विपदभिभूतं जनम्) आयतिः (प्रभावः) रहयति (त्यजति) निरायतेः ( निष्प्रभावस्य सतः ) लघुता (अगौरवं) नियता । (निश्चिता) अगरीयान् ( गौरवहीनो जनः ) नृपश्रियः (राजलक्ष्म्याः) पदं (स्थानं) न भवति ॥ १४ ॥

(समासः) अविक्रमम्=नास्ति विक्रमो यस्य सः तम् । आपदुपेतम्= आपद्भिः उपेतः तम् (उप-इ=क्त) । निरायतेः=नास्ति आयतिर्यस्य तस्य "आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः" इति मेदिनी ॥१४॥

( वाच्य० ) विपद्भिः अभिभूयते अविक्रमः । रह्यते आपदुपेतः आयत्या । नियतया लघुतया भूयते । अगरीयसा पदेन भूयते ॥

(सरलार्थः) पुरुषकारहीनो जनः विपदमाप्नोति । विपदापन्नः प्रभावहीनो भवति । प्रभावहीनो लघुर्भवति । लघुर्हि राज्याधिकारी न भवति ॥

(हिन्दी) पुरुषार्थहीन जन विपत्ति को प्राप्त होता है, विपद्ग्रस्त प्रभावहीन होता है, प्रभाव हीन लघु (तुच्छ) होता है और लघु, राज्य का अधिकारी नहीं होता ॥ १४ ॥

तदलं प्रतिपक्षमुन्नतेरवलम्ब्य व्यवसायवन्ध्यताम् ।
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः ॥१५॥

(अन्वयः) तद्, उन्नतेः, प्रतिपक्षं, व्यवसायवन्ध्यताम्, अव-

लम्ब्य, अलम् । पराक्रमाश्रयाः समृद्धयः, विषादेन, समं, न, निवसन्ति ॥ १५ ॥

(मल्लिनाथः) नदिति । तत्तस्मात् । उपेक्षायां दोषसम्भवादित्यर्थः । उन्नतेरभ्युदयस्य प्रतिपक्षमन्तरायं व्यवसायवन्ध्यतामुद्योगशून्यतामवलम्ब्यालम् । अवलम्बनेनालमित्यर्थः । 'अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति क्त्वाप्रत्ययः । तस्य ल्यबादेशः । तथाहि । पराक्रम आश्रयः कारणं यासां तास्तथोक्ताः समृद्धयः सम्पदो विषादेन सममनुत्साहेन सह न निवसन्ति । पौरुषसाध्याः सम्पदो नानुत्साहसाध्याः, उभयोः सहावस्थानविरोधादित्यर्थः । वैधर्म्येण कार्यकारणरूपोऽर्थान्तरन्यासः ॥ १५ ॥

(सुबोधिनी) तत् (तस्माद्धेतोः, पुरुषकारानालम्बने पूर्वोक्तदोषनिश्चयसम्भवाद्धेतोः) उन्नतेः (अभ्युदयस्य) प्रतिपक्षं (प्रतिकूलभूतां) व्यवसायवन्ध्यताम् (उद्योगशून्यताम्) अवलम्ब्य अलम् ( न अवलम्ब्य इत्यर्थः ) । (तथाहि) पराक्रमाश्रयाः ( पुरुषकाराधीनाः ) समृद्धयः (सम्पदः) विषादेन (अनुत्साहेन) समं (सह) न निवसन्ति (न तिष्ठन्ति) ॥ १५ ॥

(समासः) व्यवसायवन्ध्यताम्=व्यवसाये वन्ध्यः, तस्य भावः तत्ता ताम् । पराक्रमाश्रयाः=पराक्रम आश्रयो यासां ताः ॥ १५ ॥

(वाच्य०) न्युष्यते पराक्रमाश्रयाभिः......समृद्धिभिः ॥१५॥

[सरलार्थः] तस्मादुत्साहहीनो मा भूः। उत्साहहीनता हि उन्नतः प्रतिकूला भवति । किञ्च उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः न त्वनुद्योगिनमिति उद्योगः कार्य्यः ॥ १५ ॥

[ हिन्दी ] इसलिये उत्साह रहित मत होइये । हतोत्साह ही उन्नति का बाधक होता है । क्योंकि उद्योगी और पराक्रमी जनों के पास ही लक्ष्मी आती है, अनुद्योगियों के पास नहीं ॥ १५ ॥

ननु समयः प्रतीक्ष्यते, किं त्वरयेत्यत्राह—

अथचेदवधिः प्रतीक्ष्यते कथमाविष्कृतजिह्मवृत्तिना ।
धृतराष्ट्रसुतेन सुत्यजाश्चिरमास्वाद्य, नरेन्द्रसम्पदः ॥ १६ ॥

[अन्वयः] अथ, अवधिः, प्रतीक्ष्यते, चेत्, आविष्कृतजिह्म-वृत्तिना, धृतराष्ट्रसुतेन, नरेन्द्रसम्पदः; चिरम्, आस्वाद्य, कथं, सुत्यजाः ॥ १६ ॥

[मल्लिनाथः] अथेति । अथावधिः कालः प्रतीक्ष्यते चेत् 'अवधि-स्त्ववधाने स्यात्सीम्नि काले बिलेऽपि च' इति विश्वः । आविष्कृतजिह्म-वृत्तिना प्रकटितकपटव्यवहारेण धृतराष्ट्रसुतेन दुर्योधनेन नरेन्द्रसम्पदो राज्यसम्पदः । नरेन्द्रेति वा पदच्छेदः चिरं चतुर्दशवर्षाण्यास्वाद्यानुभूय कथं सुत्यजाः । ज्ञातास्वादेन तेन पश्चादपि सुखेन युद्धक्लेशं विना न त्यक्ष्यन्त एवेत्यवधिप्रतीक्षणं व्यर्थमित्यर्थः ॥ १६ ॥

[सम्बोधिनी] अथ (पक्षान्तरे, परन्तु) अवधिः (कालः, वनवासे द्वाद-शवर्षाणि अज्ञातवासे चैकं वर्षमिति त्रयोदशवर्षात्मकः समयः) प्रतीक्ष्यते (त्वया पाल्यते) चेत् (यदि, तदा) आविष्कृतजिह्मवृत्तिना (प्रकटितकपट-व्यवहारेण धृतराष्ट्रसुतेन (कपटाचारिणो धृतराष्ट्रस्य पुत्रेण दुर्योधनेन) नरेन्द्रसम्पदः (राजश्रियः) चिरम् (एतावन्तं सुदीर्घकालम्) आस्वाद्य (अनुभूय) कथं (केन प्रकारेण) सुत्यजाः (अक्लेशेन त्याज्या भवन्ति) ॥

[ समासः ] आविष्कृतजिह्मवृत्तिना = जिह्मा वृत्तिः जिह्मवृत्तिः, आविष्कृता जिह्मवृत्तिः येन तेन ॥ १६ ॥

(वाच्य०)अवधिं प्रतीक्षसे(त्वम्)सुत्यजाभिः भूयते...नरेन्द्रसम्पद्भिः

[ सरलार्थः ] वनवासमज्ञातवासं च समाप्य राज्याहरणाय यतिष्ये इति चेन्मन्यसे, तदा राज्याहरणं सुकरं न भविष्यति । यतः कपटचा-रिणो धृतराष्ट्रस्य, पुत्रः स्वयमपि कपटचारी दुर्योधनः त्रयोदशवर्षाण्य-विच्छेदेन स्वच्छन्दमुपभुज्य राज्यं सहसा नैव त्यक्ष्यति ॥ १६ ॥

( हिन्दी ) यदि आप अवधि की प्रतीक्षा करते हैं कि अज्ञात वास समाप्त हो जाने पर राज्य लेंगे तो उस समय राज्य मिलना बड़ा कठिन हो जायगा । क्योंकि कपटी धृतराष्ट्र और दुर्योधन तेरह वर्ष तक जिस राज्य को उपभोग करेंगे उसे वे सहसा कदापि नहीं लौटावेंगे ॥ १६ ॥

तदा दैववशात् स्वयमेव दास्यति चेत् तदप्यस्मभ्यं न रोचेतेत्याह—

द्विषता विहितं त्वयाऽथवा यदि लब्धा पुनरात्मनः पदम् ।
जननाथ तवानुजन्मनां कृतमाविष्कृतपौरुषैर्भुजैः ॥१७॥

( अन्वयः ) अथवा, द्विषता, पुनः, विहितम्, आत्मनः, पदं, त्वया, लब्धा, यदि "तदा" हे जननाथ ? तव, अनुजन्मनाम्, आविष्कृतपौरुषैः भुजैः, कृतम् ॥ १७ ॥

(मल्लिनाथः) द्विषतेति । अथवा द्विषता विहितं पुनः प्रत्यर्पित-मात्मनः पदं राज्यं त्वया लब्धा लप्स्यते यदि । लभेः कर्मणि लुट् । हे जननाथ ! तवानुजन्मनामनुजानामाविष्कृतपौरुषैः प्रकटितपराक्रमैर्भुजैः कृतमलम् अस्मद्भुजैर्न किञ्चित्साध्यमित्यर्थः । राज्यदानादानयोर्द्विषता-मेव स्वातन्त्र्येऽस्मद्भुजवैफल्यात् । 'क्षत्रियस्य विजेतव्यम्' इति शास्त्रात् क्षात्रेणैव राज्यं ग्राह्यमितिभावः । कृतमिति प्रतिषेधार्थमव्ययं चादिषु पठ्यते 'कृतमिति निवारणनिषेधयोः' इति गणव्याख्याने । भुजैरिति गम्यमान-साधनक्रियापेक्षया करणत्वात्तृतीया उक्तं च न्यासोद्द्योते'—न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्यापि तु गम्यमानापि' इति ॥१७॥

( सुबोधिनी ) अथवा, द्विषता ( शत्रुणा ) पुनः विहितं (प्रत्यर्पितम्) आत्मनः (स्वस्य) पदं ( राज्यं ) त्वया (भवता) लब्धा ( लप्स्यते ) यदि, (तदा) हे जननाथ ! ( हे राजन् ! ) तव (भवतः) अनुजन्मनाम् (अनुजानाम् अस्माकम्) आविष्कृतपौरुषैः (प्रकटितपराक्रमैः) भुजैः (बाहुभिः) कृतम् (अलम्, किंचित् न साध्यमित्यर्थः ) ॥१७॥

( समासः ) जननाथ = जनानां नाथस्तत् सम्बुद्धौ हेजननाथ ! अनु-जन्मनाम्—अनु ( पश्चात् ) जन्म येषां तेषाम् । आविष्कृतपौरुषैः = आविष्कृतं पौरुषं यैः ते आविष्कृतपौरुषास्तैः ॥१७॥

( वाच्यपरिवर्तनम् ) भवान्...लब्धा...॥१७॥

( सरलार्थः ) त्रयोदशवर्षावसाने दुर्य्योधनेन कृपया प्रत्यर्पितं राज्यं भोक्ष्यसे चेत् तदा अस्माकं जगत्प्रथितेन बाहुबलेन किं प्रयोजनम् । धिगस्माकं भुजबलं धिक् च त्वां परप्रसादभोजिनम् ॥ १७ ॥

(हिन्दी) तेरह वर्ष बाद दुर्योधन की कृपा से लौटाए हुए राज्य को लेने से हम लोगों के बाहुबल की क्या बहादुरी होगी ? अर्थात् आपके भाइयों का पराक्रम व्यर्थ है ॥ १७ ॥

ननु साम्नैव कार्य्यसिद्धौ किं पराक्रमेणेत्यत्राह—

मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयं हतैः ।
लघयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥१८॥

(अन्वयः) मृगाधिपः, मदसिक्तमुखैः, स्वयं, हतैः, करिभिः, वर्तयते । तेजसा, जगत्, लघयन्, महान्, अन्यतः भूतिं, न, इच्छति, खलु ॥१८॥

(मल्लिनाथः) मदेति-मृगाधिपः सिंहो मदसिक्तमुखैः । मदवर्षिभिरित्यर्थः । स्वयं स्वेनैव हतैः करिभिर्वर्तयते वृत्तिं करोति । तैरेव जीवतीत्यर्थः । चौरादिकात् वृतेर्लट् । भौवादिकस्य तु 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदनियमादिति । तथाहि । तेजसा प्रभावेण । 'तेजो बले प्रभावे च ज्योतिष्यर्चिषि रेतसि' इति वैजयन्ती । लघयँल्लघु कुर्वन्महांस्तेजस्व्यन्यतोऽन्यस्मात्पुरुषाद् भूतिं वृद्धिं नेच्छति खलु । नहि तेजस्विनः परायत्तवृत्तित्वं युक्तम् । मनुवचनं त्वशूरविषयमिति भावः । विशेषेण वक्ष्यमाणसामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १८ ॥

(सुबोधिनी) मृगाधिपः (सिंहः) मदसिक्तमुखैः (मदस्राविभिः) स्वयम् (आत्मना) हतैः (व्यापादितैः) करिभिः (गजैः) वर्तयते (जीविकां निर्वाहयति) (तथाहि) तेजसा (पराक्रमेण) जगत्, लघयन् (लघूकुर्वन्) महान् (तेजस्वीजनः) अन्यतः (अन्यस्मात् पुरुषात्) भूतिम् (ऐश्वर्य्यं) न इच्छति (न अभिलषति) खलु (निश्चितम्) ॥ १८ ॥

(समासः) मदसिक्तमुखैः = मदेन सिक्तानि मुखानि येषां तैः ॥१८॥

(वाच्य०)…मृगाधिपेन…वर्त्यते…। लघयता…महता इष्यते भूतिः ॥ १८ ॥

(सरलार्थः) पशुरपि सिंहः मदमत्तान् गजान् स्वयं व्यापाद्य भक्षयति,

न तु दुर्बलान् न चान्येन व्यापादितान् । तथा तेजस्वी जनः स्वतेजसैव बलवता सह विगृह्य सम्पदमर्जयति, न तु दुर्बलं पीडयित्वा नापि परप्रदत्तामिति॥

(हिन्दी) पशु होते हुए भी सिंह मस्त हाथियों को स्वयं मारकर खाता है तेज से जगत को परास्त करता हुआ दूसरे से बड़ी से बड़ी सम्पत्ति की भी इच्छा नहीं करता ॥१८॥

ननु युद्धे कृते प्राणात्ययो घटेत ततः किं राज्येनेत्यत्राह—

अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः ।
अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥१९॥

(अन्वयः) अभिमानधनस्य, गत्वरैः, असुभिः स्थास्नु, यशः, चिचीषतः, अचिरांशुविलासचञ्चला, लक्ष्मीः, आनुषङ्गिकं, फलं, ननु॥

(मल्लिनाथः) अभिमानेति। अभिमानधनस्य वैरिनिर्यातनमात्रनिष्ठस्य। अत एव गत्वरैर्गमनशीलैरस्थिरैः । 'गत्वरश्च' इति क्वरबन्तो निपातः । असुभिः प्राणैः करणैः। 'पुंसि भून्म्यसवः प्राणाः' इत्यमरः । स्थास्नु स्थिरम् । 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नुप्रत्ययः । अचिरमंशवो यस्याः साचिरांशुर्विद्युत्तस्या विलासः स्फुरणं तद्वच्चञ्चला । क्षणिकेत्यर्थः । लक्ष्मीः सम्पदनुषङ्गादागतमानुषङ्गिकमन्वाचयशिष्टमल्पं फलम् । मानत्राणजं यश एव मुख्यं फलमभ्युच्चयस्तु लक्ष्मीरिति मानिनामिदमेव श्लाघ्यमित्यर्थः । अत्रास्थिरप्राणत्यागेन स्थिरयशः स्वीकाराभिधानान्न्यूनाधिकविनिमयाख्यः परिवृत्त्यलङ्कारः । तदुक्तं 'काव्यप्रकाशे—'परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः' इति ॥ १९ ॥

(सुबोधिनी) अभिमानधनस्य (आत्मसम्मानरक्षणतत्परस्य) अत एव, गत्वरैः (विनश्वरैः) असुभिः (प्राणैः) स्थास्नु (अविनश्वरं) यशः (ख्यातिं) चिचीषतः (संग्रहीतुमिच्छतो जनस्य) अचिरांशुविलासचञ्चला (विद्युत्स्फुरणमिव चञ्चला, क्षणस्थायिनी) लक्ष्मीः (सम्पत्) आनुषङ्गिकम् (अवान्तरं, गौणमित्यर्थः) फलं, ननु (निश्चितम्) ॥ १९ ॥

(समासः) अभिमानधनस्य = अभिमान एव धनं यस्य तस्य । चिचीषतः = चेतुमिच्छतः । अचिरांशुविलासचञ्चला = अचिराः (क्षणस्थायिनः,

अंशवः (प्रभाः, किरणा इत्यर्थः) यस्याः सा अचिरांशुः तस्या विलासः, स इव चञ्चला । आनुषङ्गिकं = अनुषङ्गादागतम् ॥ १९ ॥

(वाच्य०) अचिरांशुविलासचञ्चलया...लक्ष्म्या...फलेन आनुषङ्गिकेण भूयते ॥ १९ ॥

(सरलार्थः) मानिनो मानरक्षार्थं नश्वरेषु देहेषु ममतां परित्यज्य युद्धं कुर्वन्ति । ते च मानरक्षाजन्यं यश एव मुख्यं फलं मन्यन्ते, न तु युद्धजयजन्यां विनश्वरीं सम्पदम् । युद्धजये तु या सम्पत् लभ्यते, तत् गौणमेव फलम् ॥ १९ ॥

(हिन्दी) मानी लोग मान की रक्षा के लिये इस नश्वर देह की ममता छोड़ कर युद्ध करते हैं । वे यश ही को मुख्य फल मानते हैं, युद्ध में प्राप्त सम्पत्ति को नहीं ॥ १९ ॥

मानिनां प्राणेभ्योऽपि तेजो गरीय इत्यत्राह—

ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः ।
अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥२०॥

(अन्वयः) जनः, भस्मनां, चयम्, आस्कन्दति, ज्वलितं, हिरण्यरेतसं, न । अतः मानिनः, अभिभूतिभयात्, असून्, सुखम्, उज्झन्ति, धाम, न ॥ २० ॥

(मल्लिनाथः) ज्वलितमिति । जनो भस्मनां चयं पुञ्जमास्कन्दति पादादिनाक्रमति । अदाहकत्वादिति भावः । ज्वलितं ज्वलन्तम् । कर्तरि क्तः । 'गतिबुद्धि—' इत्यादिसूत्रे चकाराद्वर्तमानार्थत्वम् । हिरण्यं रेतो यस्य तं हिरण्यरेतसमग्निं नास्कन्दति दाहकत्वादिति भावः । अतो हेतोर्मानिनोऽभिभूतिभयात्प्राणलोभेन तेजस्त्यागे परिभवो भविष्यतीति भयादसूनेव सुखमक्लिष्टमुज्झन्ति मानहानिकराज्जीवनात्स्वतेजसा मरणमेव वरमित्यर्थः । पूर्वतरश्लोकवदर्थान्तरन्यासः ॥ २० ॥

(सुबोधिनी) जनः (लोकः) भस्मनां चयं (राशिम्) आस्कन्दति (पादेन आक्रामति), ज्वलितं (ज्वलन्तं) हिरण्यरेतसम् (अग्निं) न (न आस्कन्दति) अतः (अस्माद्धेतोः) मानिनः (मानवन्तो जनाः) अभिभूतिभयात्

( तेजस्त्यागे परिभवशङ्कया ) असून् ( प्राणान् ) सुखम् ( अनायासेन ) उज्झन्ति (त्यजन्ति) धाम (तेजः) न (न उज्झन्ति) ॥ २० ॥

(समासः) हिरण्यरेतसम् = हिरण्यं रेतो यस्य तम् "अग्नेरपत्यं प्रथमं सुवर्णम्" इति स्मृतिः, अभिभूतिभयात् = अभिभूतेर्भयम् अभिभूतिभयं तस्मात् ॥ २० ॥

( वाच्य० ) ज्वलितः···हिरण्यरेताः न. चयः आस्कद्यते··· जनेन।···असवः···उज्झ्यन्ते,···मानिभिः, धाम न उज्झ्यन्ते॥२०॥

( सरलार्थः ) लोको भस्मराशिं पादेनाक्रामति न तु ज्वलन्तमनलं, दाहभयात् । इत्यालोच्य मानिनः परिभवभयात् प्राणान् अनायासेन त्यजन्ति, न तु तेजः ॥ २० ॥

(हिन्दी) लोग भस्म की ढेर को पैर से रौंदते हैं पर जलती हुई अग्नि को पैर जलने के डर से नहीं रौंदते । ऐसा विचार कर मानी लोग पराभव के भय से प्राण तक त्याग सकते हैं किन्तु अपना तेज नहीं ॥२०॥

तेजस्विनः स्वभावं दर्शयति—

**किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः ।**
**प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥२१॥**

(अन्वयः) मृगाधिपः, किं, फलम्, अपेक्ष्य, ध्वनतः पयोधरान्, प्रार्थयते । महीयसः, सा, प्रकृतिः, खलु यया, अन्यसमुन्नतिं न, सहते ॥ २१ ॥

(मल्लिनाथः) किमिति । मृगाधिपः सिंहः किं फलं प्रयोजनमपेक्ष्य ध्वनतो गर्जतः । धरन्तीति धराः पचाद्यच् । पयसां धरास्तान् पयोधरान् मेघान् प्रार्थयतेऽभियाति । 'याञ्चायामभियाने च प्रार्थना कथ्यते बुधैः' इति केशवः । यद्वावरुणद्धीत्यर्थः । प्रा अर्थयते । प्रास्याद्याञ्च्यावरोधयोः' इत्यभिधानात्प्रा अवरोधेन । प्रा इति तृतीयान्तम् । आकारान्तस्य प्राश-शब्दस्य योगविभागात् 'आतो धातोः, इत्यालोपः । तथाहि । महीयसो मह-

त्तरस्य सा प्रकृतिः खलु यया प्रकृत्यान्यसमुन्नतिं परवृद्धिं न सहते । महतः परभञ्जनमेव पुरुषार्थ इत्यर्थः । पूर्ववदलङ्कारः ॥ २१ ॥

(सुबोधिनी) मृगाधिपः (सिंहः) किं फलं (प्रयोजनं) अपेक्ष्य (उद्दिश्य) ध्वनतः (गर्जतः) पयोधरान् (मेघान्) प्रार्थयते (अभियाति. न कस्यापि फलस्यापेक्षा तथापि प्रार्थयते इत्यर्थः) । महीयसः (महत्तरस्य तेजस्विनः) सा प्रकृतिः (स एव स्वभावः) खलु (प्रसिद्धः) यया (प्रकृत्या) अन्यसमुन्नतिम् (अपरस्य अभ्युदयं) न सहते (स न मर्षयति) ॥ २१ ।

(समासः) धरन्तीति धराः । पचाद्यच् । पयसां धराः = पयोधराः । "स्त्रीस्तनाब्दे पयोधरौ" इत्यमरः । अन्यसमुन्नतिम् = अन्यस्य समुन्नतिः ताम् ॥ २१ ॥

[वाच्य०] पयोधराः ध्वनन्तः प्रार्थ्यन्ते मृगाधिपेन । प्रकृत्या भूयते...तया, नः सह्यते [तया]...अन्यसमुन्नतिः ॥२१॥

[सरलार्थः] सिंहो मेघस्य गर्जितमाकर्ण्य तदाक्रमणासमर्थोऽपि तं प्रति सकोपं प्रतिगर्जनं करोति । तथाहि तेजस्विनः स्वभाव एव ईदृक् येनासौ प्रतिद्वन्दिने ईर्ष्यति ॥२१ ॥

[हिन्दी] सिंह मेघ के गरजने को नहीं सह सकता इसलिये वह मेघ की तरफ क्रोध से देखता है । तेजस्वियों का स्वभाव ही कुछ ऐसा होता है कि जो प्रतिद्वन्द्वी से ईर्षा करने लगते हैं ॥२१॥

'उक्तार्थमुपसंहरति—

कुरु तन्मतिमेव विक्रमे नृप निर्धूय तमः प्रमादजम् ।
ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः ॥२२॥

[अन्वयः] नृप !, तत्, प्रमादजं, तमः, निर्धूय, विक्रमे, एव, मतिं; कुरु । विद्विषां, विपत्तयः, त्वदनुत्साहहताः, एतत् ध्रुवम्, अवेहि ॥ २२ ॥

[मल्लिनाथः] कुरु तदिति । हे नृप ! तत्तस्मादुक्तरीत्या पराक्रमोत्साहयोर्हेतुत्वाद्धेतोः 'यत्तद्यतस्ततो हेतौ' इत्यमरः । प्रमादजं तमो मोहं नि-

धूंय निरस्य विक्रमे पौरुष एव मतिं कुरु । विक्रममेवाङ्गीकुरु, न तूपायान्तरमित्यर्थः । न च विक्रमवैफल्यशङ्का कार्येत्याह-ध्रुवमिति । विद्विषां विपत्तयस्त्वदनुत्साहहतास्तवानुत्साहेनाव्यवसायेन । हताः प्रतिबद्धाः अन्यथा प्रागेव विपद्येरन्निति भावः । इत्येतद् ध्रुवं निश्चितमवेहि विद्धि । 'ध्रुवं नित्ये निश्चिते च' इति शाश्वतः ।। २२ ।।

( सुबोधिनी ) हे नृप ! ( हे राजन् ! ) तत् (तस्माद्धेतोः) प्रमादजं (प्रमादात् अनवधानतया च जातं) तमः (मोहं) निर्धूय (इदानीं परित्यज्य) विक्रमे (तेजःप्रकाशे) एव, मतिं (बुद्धिं) कुरु । विद्विषां (शत्रूणां) विपत्तयः (विपदः) त्वदनुत्साहहताः (तवैव अनुत्साहेन अनुद्यमेन हताः प्रतिबद्धाः) एतत् (इति) ध्रुवं (निश्चितम्) अवेहि [जानीहि] ।।२२।।

[वाच्य०] क्रियतां [त्वया]...मतिः ।...अवेयतां [त्वया] । त्वदनुत्साहहताभिः भूयते विपत्तिभिः ।।२२।।

[सरलार्थः] हे महाराज ! अधुना अवसादं परित्यज्य शत्रुजये उत्साहं कुरु । एतावता कालेनापि शत्रूणां परिभवो यन्न भवति, तत् तव अनुत्साहस्यैव फलमित्यवगच्छ ।। २२ ।।

[हिन्दी] हे महाराज ! अब आप मोह का त्याग करें और शत्रु को जीतने में उत्साह दिखलावें । अब तक शत्रुओं की हार जो नहीं हुई है उसका कारण केवल आप अपना हतोत्साह समझें।।

अस्माकं पराजयशङ्का न कार्य्येत्याह—

द्विरदानिव दिग्विभावितांश्चतुरस्तोयनिधीनिवायतः ।
प्रसहेत रणे तवानुजान्, द्विषतां कः शतमन्युतेजसः ।।२३।।

[अन्वयः] दिग्विभावितान्, आयतः, चतुरः, द्विरदान्, इव, तोयनिधीन्, इव, रणे, आयतः, शतमन्युतेजसः, तव अनुजान्, द्विषतां, कः, प्रसहेत ।। २३ ।।

(मल्लिनाथः) द्विरदानिति । दिग्विभावितान्दिक्षु प्रसिद्धांस्तानायत आगच्छतः । आङ्पूर्वादिणधातोः शतृप्रत्ययः । चतुरो द्विरदान्दिग्गजानिव,

तथोक्तविशेषणांश्चतुरस्तोयनिधीनिव, रण आयतो दिग्विभावितान्छतमन्युतेजस इन्द्रविक्रमांश्चतुरस्तवानुजान् द्विषतां मध्ये कः प्रसहेत। सोढुं शक्नुयादित्यर्थः। 'शकि लिङ्च' इति शक्यार्थे लिङ्। अतो निःशङ्कं प्रवर्तस्वेति भावः ॥ २३ ॥

(सुबोधिनी) दिग्विभावितान् [दिक्षु प्रसिद्धान्] आयतः [आगच्छतः] चतुरः [चतुःसंख्यकान्] द्विरदान् [गजान्, दिग्हस्तिनः] इव [यथा] "तथा" आयतः, तोयनिधीन् [चतुरः समुद्रान्] इव, रणे [युद्धे] आयतः [आगच्छतः] शतमन्युतेजसः [इन्द्रतुल्यपराक्रमशालिनः] तव [भवतः] अनुजान् [भ्रातॄन् अस्मान्] द्विषतां [शत्रूणां मध्ये] कः प्रसहेत [सोढुं शक्नुयात्] न कोऽपीत्यर्थः ॥ २३ ॥

(समासः) दिग्विभावितान्=दिक्षु विभावितास्तान्। द्विरदान् द्वौ रदौ [दन्तौ] येषां तान्। "दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः" इत्यमरः। शतमन्युतेजसः=शतं मन्यवः [यज्ञाः] यस्य सः शतमन्युः, शतमन्योरिव तेजो यस्य सः तस्य ॥ २३ ॥

[वाच्य०] द्विरदाः···दिग्विभाविताः···चत्वारः तोयनिधयः इव आयन्तः प्रसह्येरन्···अनुजाः···केन···॥ २३ ॥

(सुबोधिनी) त्वं स्वयमिन्द्रतुल्यपराक्रमशाली, तव भ्रातरो वयमपि दिग्गजा इव बलशालिनः सागरा इव अधृष्याश्च। वयं पञ्च मिलित्वा यदा रणं करिष्यामः, तदा द्विषतां मध्ये ईदृशः कश्चिन्नास्ति योऽस्मान् पराजेष्यते ॥ २३ ॥

(हिन्दी) दिशाओं में प्रसिद्ध, आने वाले चार हाथियों की तरह और विशालकाय चार समुद्र की तरह रणभूमि में आने वाले इन्द्र समान पराक्रमी आपके भाइयों का शत्रु में कौन ऐसा है जो मुकाबिला कर सकता है ॥२३॥

आशीर्वादव्याजेन फलितमाह—

ज्वलतस्तव जातवेदसः सततं वैरिकृतस्य चेतसि।
विदधातु शमं शिवेतरा रिपुनारीनयनाम्बुसन्ततिः ॥ २४ ॥

( अन्वयः ) शिवेतरा, रिपुनारीनयनाम्बुसन्ततिः, तव चेतसि सततं, ज्वलतः, वैरिकृतस्य, जातवेदसः, शमं, विदधातु ॥ २४ ॥

(मल्लिनाथः) ज्वलत इति । तव चेतसि सततं ज्वलतो वैरिकृतस्य जातवेदसः । क्रोधाग्नेरित्यर्थः । शिवेतराशिवामङ्गला । वैधव्यदुःखजनकत्वादिति भावः । रिपुनारीनयनाम्बुसन्ततिर्वैरिवनिताश्रुप्रवाहः शमं विदधातु । वैरिकृतस्य क्रोधस्य वैरिवधमन्तरेण शान्त्यसम्भवादवश्यं तद्वधस्त्वया कर्तव्य इत्यर्थः । क्रोधस्य विषयस्य निगरणेन विषयिणो जातवेदस एवोपनिबन्धादतिशयोक्तिरलङ्कारः । तदुक्तम्—'विषयस्यानुपादानाद्विषय्युपनिबध्यते । यत्र सातिशयोक्तिः स्यात्कवेः प्रौढोक्तिजीविता ॥' इति । तत्रापि क्रोधस्य जातवेदसो भेदेऽप्यभेदाध्यवसायाद् भेदेऽभेदरूपा । तत एवाम्बुनिर्वाप्यत्वोक्तिश्च घटते । तथा च यथाम्बुसेकेनाग्निः शाम्यति तथा शत्रुवधेन क्रोध इत्यौपम्यं गम्यते ॥ २४ ॥

(सुबोधिनी) शिवेतरा (वैधव्यदुःखजनकत्वात् अमङ्गला) रिपुनारीनयनाम्बुसन्ततिः (शत्रुरमणीनामश्रुधारा) तव, चेतसि (मनसि) सततं (निरन्तरं) ज्वलतः (दीप्यमानस्य ) वैरिकृतस्य ( शत्रुभिरुत्पादितस्य ) जातवेदसः (अवमाननाजनितस्य दुःखरूपस्य अनलस्य) शमं (शान्तिं) विदधातु (करोतु)।

(समासः) जातवेदसः = जातान् (प्राणिनः) विन्दते (लभते जठरानलत्वेन ) इति जातवेदास्तस्य । शिवतेरा = शिवायाःइतरा । रिपूणां नार्यः, रिपुनार्यः नयनानामम्बूनि नयनाम्बूनि; रिपुनारीणां नयनाम्बूनि, रिपुनारीनयनाम्बूनि तेषां सन्ततिः ॥२४॥

(वाच्यपरिवर्तनम्) विधीयतां शमः शिवेतरया रिपुनारीनयनाम्बुसन्तत्या ॥२४॥

(सरलार्थः) शत्रवः सभामध्ये तव यादृशीमवमाननां कृतवन्तः, तेषां विनाशनेनैव तस्याः प्रतिकारो भवेत्, नान्यथा ॥२४॥

(हिन्दी) शत्रुओं की स्त्रियों के नेत्र का अमंगल जल आपके हृदय में निरन्तर धधकती हुई शत्रुकृत आग को शान्त करे ॥२४॥

इति दर्शितविक्रियं सुतं मरुतः कोपपरीतमानसम् ।
उपसान्त्वयितुं महीपतिर्द्विरदं दुष्टमिवोपचक्रमे ॥२५॥

(अन्वयः) इति दर्शितविक्रियं कोपपरीतमानसं मरुतः, सुतं, महीपतिः, दुष्टं द्विरदम्, इव, उपसान्त्वयितुम् उपचक्रमे ॥२५॥

(मल्लिनाथः) इतीति । इत्युक्तरीत्या दर्शिता विक्रिया विकारो वागारम्भात्मको येन तं कोपपरीतमानसं कोपाक्रान्तचित्तम् । इदं विशेषणद्वयं द्विरदेऽपि योज्यम् । मरुतः सुतं भीमं महीपतिर्युधिष्ठिरो दुष्टं द्विरदमिव । एतेन भीमस्य शौर्यमेव, न बुद्धिरस्तीति गम्यते । उपसान्त्वयितुमपनेतुमुपचक्रमे प्रवृत्तः । 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम् । राज्ञा तावदुपकारविशेषापेक्षया कथञ्चिदवशो जनः शनैः शनैर्द्विरदवद्वशीकरणीयः, न तु त्याज्य इति भावः ॥२५॥

(सुबोधिनी) इति (उक्तरीत्या) दर्शितविक्रियम् (प्रकटितस्वमनोविकारं) कोपपरीतमानसं (क्रोधाक्रान्तचित्तं) मरुतः सुतम् (वायुपुत्रं भीमं) महीपतिः (राजा युधिष्ठिरः) दुष्टं (मदकलुषितम्) (गजम्) इव, उपसान्त्वयितुम् (कोपं त्याजयितुम्, विनेतुम्) उपचक्रमे (आरब्धवान्) ॥२५॥

(समासः) कोपपरीतमानसम्=कोपेन परीतं मानसं यस्य सः तम् । दर्शिता प्रकाशिता विक्रिया शारीरो मानसश्च विकारो येन तम् ॥२५॥

(वाच्यपरिवर्तनम्) महीपतिना...... ॥२५॥

(सरलार्थः) हस्तिपकः क्रुद्धं गजं यथा अङ्कुशेन प्रकृतिस्थं करोति, तथा राजा कुपितं भीमसेनं सान्त्वनावाक्येन प्रकृतिस्थं कर्तुं प्रवृत्तः ॥२५॥

(हिन्दी) इस प्रकार अपने मन के विकार को प्रगट करने वाले, क्रोध से पूर्ण वायुपुत्र भीम को राजा युधिष्ठिर मदमस्त हाथी की तरह शान्त करने लगे ॥२५॥

प्रथमं तावत् श्लोकत्रयेण प्रशंसावादेन प्रसादयति—

अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मंगलास्पदे ।
विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते ॥२६॥

(अन्वयः) अपवर्जितविप्लवे, शुचौ, हृदयग्राहिणि मंगलास्पदे, तव, गिरां, विस्तरे, मतिः आदर्शे, इव, विमला, अभिदृश्यते ॥२६॥

(मल्लिनाथः) अपवर्जितेति । विप्लवः प्रमाणबाधः । अन्यत्र बाह्यमलसंक्रमः । सोऽपवर्जितो यस्य तस्मिन्नपवर्जितविप्लवे । शुचौ । सौशब्द्यं लोहशुद्धिश्च शुचित्वम् । तद्वतीत्यर्थः । अत एव हृदयग्राहिणि मनोरमे मङ्गलास्पदे । एकत्र हितार्थप्रतिपादकत्वादन्यत्र मङ्गलवस्तुत्वाच्च श्रेयस्करे । 'रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम् । गुरुमग्निं तथा सूर्यं प्रातः पश्येत्सदा बुधः' इति पुराणवचनात् । तव गिरां विस्तरे वाक्प्रपञ्चे । 'प्रथने वावशब्दे' 'ऋदोरप्' इत्यप् । अत एव 'विस्तारो विग्रहो व्यासः स तु शब्दस्य विस्तरः' इत्यमरः । मतिस्त्वद्बुद्धिरादर्शे दर्पण इव । 'दर्पणे मुकुरादर्शौ' इत्यमरः, विमला विशदाभिदृश्यते । वाग्वैशद्यादेव मतिवैशद्यमनुमीयते । तत्पूर्वकत्वात्तस्येत्यर्थः ॥ २६ ॥

(सुबोधिनी) अपवर्जितविप्लवे (प्रमाणबाधपरिशून्ये, सप्रमाणे) शुचौ (विशुद्धे) हृदयग्राहिणि (मनोहरे) मङ्गलास्पदे (श्रेयस्करे) तव (भवतः) गिरां विस्तरे (वाक्यप्रपञ्चे) मतिः (बुद्धिः) आदर्शे (दर्पणे) इव, विमला (विशदा, परिष्कृता) अभिदृश्यते (मया लभ्यते) ॥ २६ ॥

(समासः) अपवर्जितविप्लवे = अपवर्जितो विप्लवो यस्य तस्मिन् । हृदयग्राहिणि = हृदयं गृह्णातीति (तस्मिन्) णिनिः ॥ २६ ॥

(वाच्य०)...विमलां...मतिम्...अभिपश्यन्ति (जनाः) ॥२६॥

( सरलार्थः ) यथा परिमार्जिते दर्पणे विशदा प्रकृतिर्दृश्यते, तथा त्वदीये विशुद्धे वचसि विमला बुद्धिः प्रकाशते ॥ २६ ॥

(हिन्दी) सप्रमाण, पवित्र, मनोहर और कल्याणकारी आपके वाक्य प्रपंच को सुनने से आपकी बुद्धि निर्मल मालूम पड़ती है, जैसे स्वच्छ दर्पण में प्रतिबिम्ब ॥२६॥

स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम् ।
रचिता पृथगर्थता गिरां, न च सामर्थ्यमपोहितं क्वचित् ॥

(अन्वयः) पदैः, स्फुटता, न, अपाकृता, अर्थगौरवं, च न, स्वीकृतं न। गिरां, पृथगर्थता, रचिता, क्वचित्, सामर्थ्यञ्च न, अपोहितम् ॥२७॥

(मल्लिनाथः) स्फुटतेति। उपपत्तिरिति च। पदैः सुप्तिङन्तशब्दैः स्फुटता विशदार्थता नापाकृता न त्यक्ता। अर्थगौरवमर्थभूयस्त्वं च न नस्वीकृतम्। स्वीकृतमेवेत्यर्थः। वैशद्यप्रसक्तार्थगौरवाभावनिवर्तनार्थं नञ्द्वयम्। 'सम्भाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति वामनः। गिरां पदानामवान्तरवाक्यानां च पृथगर्थता भिन्नार्थता। अपुनरुक्तार्थतेति यावत्। रचिता कृता। तथा क्वचिदपि सामर्थ्यं गिरामन्योन्यसाकाङ्क्षत्वं नापोहितं न वर्जितम्। अन्यथा दशदाडिमादिशब्दवदेकवाक्यता न स्यात्। यथाहुः—'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति। नन्वर्थगौरवमित्यत्र कथं षष्ठीसमासः। 'पूरणगुण—' इत्यादिना प्रतिषेधात्। नैषदोषः। ये शुक्लादयः शब्दा गुणे गुणिनि च वर्तन्ते—यथा पटस्य शौक्ल्यं शुक्लः पट इति च। तेषामेवात्र निषेधात्। ये च पुनः स्वतो गुणमात्रवचनः यथा गौरवं प्राधान्यं रसो गन्धः स्पर्श इत्येवमादयस्तेषामनिषेधात्, तथा तत्स्थैश्च गुणैः षष्ठी समस्यते, इति वचनाद्बहुलमभियुक्तप्रयोगदर्शनाच्च। बलाकायाः शौक्ल्यमित्यादौ तु भाष्यकारवचनादसमासः। अत एवाह वामनः—"पत्रपीतिमादिषु गुणवचनसमासो बाहिस्यात्" इति ॥२७॥

(सुबोधिनी) पदैः (सुप्तिङन्तशब्दैः) स्फुटता (स्पष्टता, सरलता) न अपाकृता (न त्यक्ता) अर्थगौरवम् (अर्थभूयस्त्वं) च न स्वीकृतं न (स्वीकृतमेव) गिरां (वाक्यस्थानां पदानां) पृथगर्थता (भिन्नार्थता, अपुनरुक्तार्थता) रचिता (त्वया कृता) क्वचित् (कुत्रापि) सामर्थ्यं (परस्परान्वयित्वं) च न अपोहितं (न त्यक्तम्) ॥२७॥

(समासः) अर्थगौरवं = अर्थस्य गौरवम्। पृथगर्थता = पृथग् अर्था यासां ताः पृथगर्थाः, तासां भावः तत्ता ॥२७॥

(वाच्य०) स्फुटतां पदानि न अपाकृतवन्ति...स्वीकृतवन्ति...। रचितवान् [त्वं] पृथगर्थतां...अपोहितवान् ॥ २७ ॥

(सरलार्थः) सरसशब्दविन्यासस्त्वया कृतः, तत्रापि अर्थगौरवमस्त्येव । आपाततः पुनरुक्तवद्भासमानानां पदानां भिन्नार्थतया वस्तुतः पुनरुक्तिदोषो न विद्यते । निराकाङ्क्षं किमपि पदं वाक्यं च न प्रयुक्तम् ॥ २७ ॥

[ हिन्दी ] आपने अपने वाक्यों में स्पष्ट अर्थ कहने वाले ही पदों का प्रयोग किया है फिर भी अर्थगौरव सुरक्षित ही रक्खा । कथा सुनने मात्र से पुनरुक्त की तरह मालूम होने वाले पद भिन्न २ अर्थ के प्रतिपादक होने के कारण पुनरुक्ति दोष से रहित हैं। निराकाङ्क्ष एक भी पद प्रयुक्त नहीं किया है ॥ २७ ॥

उपपत्तिरुदाहृता बलादनुमानेन न चागमः क्षतः ।
इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः ॥२८ ॥

( अन्वयः ) बलात्, उपपत्तिः, उदाहृता, अनुमानेन, आगमः, च, न, क्षतः । अनीदृगाशयः, कः, ईदृक्, इदं प्रसभं, वक्तुम्, उपक्रमेत ॥

(मल्लिनाथः) उपपत्तिरिति । किञ्च बलाद् बलमाश्रित्य । कर्मणि ल्यब्लोपे पञ्चमी वक्तव्या । उपपत्तिर्युक्तिरुदाहृता । पराक्रमपक्ष एव श्रेयानिति युक्तिरुक्तेत्यर्थः । उचितं चैतन्महावीरस्येतिभावः । तथानुमानेन युक्त्यागमः शास्त्रं च न क्षतो न हतः । किन्त्वागमाविरुद्धमेवोक्तम् । अन्यथा तद्विरोधानुमानस्यैव प्रामाण्यभङ्गप्रसङ्गादिति भावः । ईदृगित्थं क्षात्रयुक्तमिदं वचनमविद्यमान ईदृगाशय इत्थं क्षात्रयुक्ताभिप्रायो यस्य सोऽनीदृगाशयः । 'अभिप्रायश्छन्द आशयः' इत्यमरः । कः प्रसभं हठाद्वक्तुमुपक्रमेत न कोऽपीत्यर्थः । इत्थं वक्तुमुपक्रमितैव नास्ति । वक्ता तु दूरापास्त एवेतिभावः । केचिदेतच्छ्लोकत्रयं निन्दापरत्वेनापि योजयन्ति । तदसत्, हितोपदेशमात्रतत्परस्यातिवत्सलस्य राज्ञो मत्सरिण इव महावीरे भ्रातरि विधेये सर्वानर्थमूलभूतनिन्दातात्पर्यकल्पनानौचित्यादिति ॥ २८ ॥

(सुबोधिनी) बलात् (क्षात्रं तेजः आश्रित्य) उपपत्तिः (युक्तिः) उदाहृता (त्वया उक्ता, तथापि) अनुमानेन (युक्त्या) आगमः (शास्त्रं) च न

क्षतः (न हतः, नाप्रमाणीकृतः) अनीदृगाशयः (त्वादृशाभिप्रायरहितः) कः (को जनः) ईदृक् (इत्थं क्षात्रशास्त्रोभयानुरूपम्) इदं (पूर्वोक्तं वचनं) प्रसभं (हठात्) वक्तुं (कथयितुम्) उपक्रमेत (आरभेत) न कोऽपीत्यर्थः ॥

(समासः) अनुमानेन = अनुमीयत इत्यनुमानम्। अनीदृगाशयः = ईदृक् आशयो यस्य स ईदृगाशयः, न ईदृगाशयः अनीदृगाशयः ॥२८॥

(वाच्य०) उपपत्तिम् उदाहृतवान् (त्वम्) ...आगमं क्षत-वान्। अनीदृगाशयेन...केन उपक्रम्येत ॥ २८ ॥

(सरलार्थः) त्वया क्षात्रधर्म्मानुरूपा युक्तिः प्रदर्शिता, तथापि युक्तिः शास्त्रानुसारिण्येव। त्वां विना अन्यः कश्चित् ईदृग् वचनस्य प्रवर्त्तकोऽपि नास्ति, वक्ता तु सुदूरं पराहत एव ॥ २८ ॥

(हिन्दी) अपने मन्तव्य को स्वीकार कराने के लिये शास्त्र-सङ्गत युक्तियों पर काफी प्रकाश डाला है। तुमको छोड़कर दूसरा ऐसा कौन है जो इस प्रकार कह सके ॥ २८ ॥

यदि साधूक्तं तर्हि तथैव क्रियतामित्याशङ्क्याह—

अवितृप्ततया तथापि मे हृदयं निर्णयमेव धावति।
अवसाययितुं क्षमाः सुखं न विधेयेषु विशेषसम्पदः ॥२९॥

(अन्वयः) तथापि, मे, हृदयम्, अवितृप्ततया, निर्णयम्, एव, धावति, विधेयेषु, विशेषसम्पदः, सुखम्, अवसाययितुं, न क्षमाः॥

(मल्लिनाथः) अवितृप्ततयेति—तथापि त्वया सम्यङ्निर्णीतेऽपि मे हृदयमवितृप्ततयासन्तुष्टतया। अद्यापि संशयगतत्वेनेत्यर्थः। निर्णयमेव धावत्यनुसरति। अपेक्षत इति यावत्। अद्यापि निर्णयस्यानुदयादिति भावः। निर्णयानुदये हेतुमाह—अवेति। विधेयेषु सन्धिविग्रहादिकर्तव्यार्थेषु या विशेषसम्पदोऽवान्तरभेदभूमानस्ताः सुखमक्लेशेनावसाययितुम् पुरुषान्प्रत्या-नुकूल्येन स्वस्वरूपं स्वयमेव शीघ्रं प्रत्याययितुमित्यर्थः। स्यतेर्ण्यन्तादखि कर्मकर्तृ काश् मुन्। शेरणाविति सूत्रस्यायं विषयः। क्षमन्त इति क्षमाः। पचाद्यच्। शक्ता न भवन्ति। 'क्षमं शक्ते हिते त्रिषु' इत्यमरः। विधेय-

मात्रस्य सुगमत्वेऽपि तद्विशेषाणां सौक्ष्म्याद्बाहुल्याच्च दुर्ज्ञेयत्वादद्यापि निर्णयाकाङ्क्षेति तात्पर्यार्थः। अत्र निर्णयधावनं प्रत्युत्तरवाक्यार्थस्य हेतुत्वाभिधानाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। तदुक्तम् 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' ॥ २९ ॥

(सुबोधिनी) तथापि (त्वया सम्यगुक्तेऽपि) मे (मम) हृदयं (मनः) अवितृप्ततया (असन्तुष्टतया हेतुना) निर्णयं (सिद्धान्तम्) एव, धावति (अनुसरति, अपेक्षते) यतः, विधेयेषु (कर्तव्येषु सन्धिविग्रहादिषु) विशेषसम्पदः (भेदोत्कर्षाः, उत्कृष्टाः अवान्तरभेदाः) सुखम् (अक्लेशेन) अवसाययितुं (स्वस्वरूपं पुरुषान् प्रत्याययितुं) न क्षमाः (न समर्था भवन्ति)॥

(समासः) अवितृप्ततया = न विशेषेण तृप्तः अवितृप्तस्तस्य भावस्तत्ता तया। विशेषसम्पदः = विशेषाणां सम्पदो विशेषसम्पदः ॥ २९ ॥

[वाच्यपरिवर्तनम्] हृदयेन निर्णयः…धाव्यते।…क्षमाभिः भूयते विशेषसम्पद्भिः ॥२९॥

(सरलार्थः) यद्यपि तव उक्तिः समीचीनैव, तथापि मे मनस्तत्र सन्तोषमलब्ध्वा कर्तव्यनिर्णयमपेक्षते। यतस्त्वं सामान्याकारेणैव सन्धिविग्रहादिकर्त्तव्यार्थान् निर्दिष्टवानसि, तत्र ये विशेषास्तेऽप्यवश्यं पर्यालोचनीयाः ॥

(हिन्दी) फिर भी मेरा हृदय तुम्हारी बहस से तृप्त नहीं है। कर्तव्य निर्णय में सन्दिग्ध ही है। सन्धिविग्रहादि कर्म का जो दिग्दर्शन कराया है वह सामान्यरूप से ठीक है, पर इसके जो अवान्तर भेद हैं, उस पर भी विचार करना परमावश्यक है॥२९॥

विशेषावधारणं विना कर्म्मणि न प्रवर्त्तितव्यमित्याह —

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृष्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥३०॥

[अन्वयः] क्रियां, सहसा, न, विदधीत। अविवेकः, परम् आपदां पदम्। गुणलुब्धाः, सम्पदः, विमृष्यकारिणं, स्वयम्, एव, वृणते, हि ॥३०॥

(मल्लिनाथः) सहसेति । क्रियते इति क्रिया कार्यं तां सहसा अविमृश्येत्यर्थः । 'सहसेत्याकस्मिकाविमर्शयोः' इति गणव्याख्याने स्वरादिपाठादव्ययम् । न विदधीत न कुर्वीत । कुतः । अविवेकोऽविमृश्यकारित्वं परमत्यन्तमापदां पदं स्थानम् । कारणमित्यर्थः । व्यतिरेकेणोक्तमर्थमन्वयेनाह—वृणत इति । गुणलुब्धा गुणगृध्नव इति स्वयंवरहेतूक्तिः । सम्पदः श्रियः । विमृष्य करोतीति विमृष्यकारी । 'उपपदमतिङ्' इति समासः । ते स्वयमेव वृणते भजन्ते हि । 'वृङ् सम्भक्तौ इति धातुः । तस्माद्विमृश्यैव प्रवर्तितव्यमित्यर्थः । अत्र सहसा विधाननिषेधलक्षणविमृष्यकारित्वरूपकारणस्यापद्रूपव्यतिरेककार्येण समर्थनाद्वैधर्म्येणार्थान्तरन्यासः । द्वितीयार्धेन च स एव साधर्म्येणेति ज्ञेयम् ॥ ३० ॥

(सुबोधिनी) क्रियां (किमपि कार्य्यं) सहसा (हठात्) अविचार्य्यैवेत्यर्थः, न विदधीत (न कुर्वीत) अविवेकः (अविमृष्यकारी जनः) परमापदां (महाविपदां) पदम् (आस्पदं, पात्रं भवति) । गुणलुब्धाः ( गुणपक्षपातिन्यः ) सम्पदः (श्रियः) विमृष्यकारिणं (विचारपूर्वककर्म्मकर्त्तारं) स्वयमेव वृणते (भजन्ते) हि (निश्चितम्) ॥ ३० ॥

(समासः) गुणलुब्धाः-गुणैः लुब्धाः । अविवेकः=नास्ति विवेको यस्य सः । विमृष्यकारिणं= विमृष्य करोतीति तम् ॥ ३० ॥

(वाच्यपरिवर्तनम्)···विधीयेत (जनेन)···क्रिया । अविवेकेन···पदेन भूयते । व्रियते·· विमृष्यकारी गुणलुब्धाभिः··· सम्पद्भिः ॥३०॥

(सरलार्थः) अविमृष्य किमपि कार्य्यं न कर्त्तव्यम् । अविमृष्यकारी विपदम् आप्नोति । विमृष्यकारी तु अक्लेशेन सम्पदो लभते ॥ ३० ॥

(हिन्दी) सहसा कोई काम नहीं कर बैठना चहिये । विचार किये बिना किया हुआ काम आपत्ति का कारण बनता है । गुणों पर मुग्ध होने वाली सम्पत्ति विचार पूर्वक काम करने वाले को स्वयं जयमाल पहिनाती है ॥३०॥

विमृष्यकारितायाः फलान्तरं दर्शयति—

अभिवर्षति योऽनुपालयन्विधिबीजानि विवेकवारिणा ।
स सदा फलशालिनीं क्रियां शरदं लोक इवाधितिष्ठति ॥३१॥

(अन्वयः) यः, विधिबीजानि, अनुपालयन् विवेकवारिणा, अभिवर्षति, सः, फलशालिनीं, क्रियां, लोकः, शरदम्, इव, सदा, अधितिष्ठति ॥ ३१ ॥

(मल्लिनाथः) अभीति । यः पुमान् । विधीयन्ते इति विधयः कृत्यवस्तूनि बीजानीवेत्युपमितसमासः । शरदं लोक इवेति वाक्यगतोपमानुसारात् । तानि विधिबीजानि । विवेको वारीव तेन विवेकवारिणा । पूर्ववत्समासः । अनुपालयन्प्रतीक्षमाणः संरक्षन्नभिवर्षति सिञ्चति । सः पुमान् । फलं साधननिष्पाद्योऽर्थः, सस्यं च 'सस्ये हेतुकृते फलम्' इत्युभयत्राप्यमरः । तच्छालिनीं क्रियां कर्म लोको जनः । 'लोकस्तु भुवने जने' इत्यमरः, शरदमिव सदा नित्यमधितिष्ठति । सदा क्रियाफलं प्राप्नोत्येव । न कदाचिद्व्यभिचरतीत्यर्थः । साहसिकस्य काकतालीयन्यायेन फलसिद्धिर्विवेकिनस्तु नियतेतिभावः । अत्र फलशब्देन सस्यहेतुकृतयोरर्थयोरभेदाध्यवसायाच्छ्लेशमूलातिशयोक्तिस्तदनुगृहीता चोपमेत्यनुसन्धेयम् ॥ ३१ ॥

(सुबोधिनी) यः, विधिबीजानि (कर्त्तव्यरूपबीजानि) अनुपालयन् (संरक्षन्) विवेकवारिणा ( विवेकरूपेण जलेन ) अभिवर्षति (सिञ्चति) सः, फलशालिनीं क्रियां (फलोपधायकं कर्म्म) लोकः, शरदं (शरत्कालम्) इव, सदा (नित्यम्) अधितिष्ठति (प्राप्नोति) ॥ ३१ ॥

(समासः) विधिबीजानि = विधय एव बीजानि तानि । अनुपालयन् = अनुपालयतीत्यनुपालयन् । विवेकवारिणा । विवेक एव वारि तेन । फलशालिनीम्—फलेन शालते या ताम् ॥ ३१ ॥

(वाच्य०) अभिवृष्यन्ते येन अनुपालयता...। तेन...फलशालिनी क्रिया शरत् लोकेन...अधिष्ठीयते ॥ ३१ ॥

(सरलार्थः) यथा कृषकः धान्यादिबीजानि क्षेत्रे उप्त्वा क्षेत्रियतृणा-

दिनिरसनेन संरक्षन् अन्तराऽन्तरा वारिणा च सिञ्चन् शरत्काले प्रचुराणि शस्यानि लभते, तथैव यः कृषकः सन्धिविग्रहादिकर्माणि कर्त्तव्यतया निश्चित्य सुगुप्तं रक्षन् विवेकपूर्वकं यथाकालम् अनुतिष्ठति स निश्चितमेव फलं प्राप्नोति॥

(हिन्दी) जो राजा कृत्य वस्तुरूप बीज की रक्षा करता हुआ विवेकरूप जल से उसे सींचता है वह, धान्यों के पौधों से पूर्ण शरद् ऋतु को किसान की तरह, अपने उस कर्म का फल प्राप्त ही करता है, कभी भी उसकी वह नीति व्यर्थ नहीं जाती ॥२१॥

शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलङ्क्रिया ।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः ॥ ३२ ॥

(अन्वयः) शुचि, श्रुतं, वपुः, भूषयति, प्रशमः, तस्य अलङ्क्रिया भवति, पराक्रमः, प्रशमाभरणं ( भवति ) सः नयापादित-सिद्धिभूषणः (भवति) ॥ ३२ ॥

(मल्लिनाथः) शुचीति । सम्प्रदायशुद्धं श्रुतं शास्त्रश्रवणं कर्तृ वपूर्भूषयति । अन्यथा विद्वान्पुरुषः शोच्य इति भावः । तस्य श्रुतस्य प्रशमः क्रोधोपशान्तिरलंक्रिया भूषणं भवति । अन्यथा तद्वैफल्यादिति भावः। पराक्रमः सत्यवसरे शौर्यं प्रशमस्याभरणं भवति अन्यथा सर्वैः परिभूयत इतिभावः। सः पराक्रमः । नयापादिता नीतिसम्पादिता, विवेकपूर्विकेति यावत् । सा चासौ सिद्धिश्च सैव भूषणं यस्य स तथोक्तः। अन्यथा साहसिकस्य सिद्धिः काकतालीयत्वेन पक्षे पराक्रमवैयर्थ्यं स्यादिति भावः। वपुषो भूषयतैवात्र सिद्धेर्भूषणतैव तु । उभयं मध्यमानां तु तेषां पूर्वोत्तरेच्छया । इति विवेकः । एवं विशिष्टसिद्धेरन्यभूषितताया एव भूषणत्वोक्त्या सर्वोत्तरतया स्तुतिर्गम्यते । अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषणत्वादेकावल्यलङ्कारः । तदुक्तम्—"यत्र विशेषणभावं पूर्वं पूर्वं प्रति क्रमेणैव । भजति परं परमेषालंकृतिरेकावली कथिता" इति ॥ ३२ ॥

(सुबोधिनी) शुचि ( शुद्धं, गुरुमुखात् यथाविधि अधिगतं ) श्रुतं (शास्त्रज्ञानं) वपुः (शरीरं) भूषयति (अलङ्करोति) प्रशमः (क्रोधोपशान्तिः)

तस्य (श्रुतस्य) अलंक्रिया (भूषणं) भवति, पराक्रमः (यथावसरं शौर्यं) प्रशमाभरणं (प्रशमस्य शान्तेः आभरणम् अलंकारः) भवति । सः (पराक्रमः) नयापादितसिद्धिभूषणः (नयेन नीत्या आपादिता या सिद्धिः सैव भूषणं स तथाभूतो भवति ॥ ३२ ॥

(वाच्य०) शुचिना भूयते श्रुतेन...। प्रशमेन...भूयते अलंक्रियया प्रशमाभरणेन भूयते पराक्रमेण । तेन नयापादितसिद्धिभूषणेन भूयते ॥ ३२ ॥

( सरलार्थः ) शरीरस्य भूषणं विद्या, विद्याया भूषणं क्रोधहीनता, क्रोधहीनताया भूषणं सति अवसरे शौर्यप्रकाशः, शौर्यस्य भूषणं विवेकपूर्विकया नीत्या सिद्धिलाभः ॥ ३२ ॥

(हिन्दी) विधि पूर्वक पढ़ी हुई विद्या शरीर को अलंकृतकरती है। शान्ति विद्या को अलंकृत करती है। समय आ पड़ने पर किये हुए पराक्रम से शान्ति अलंकृत होती है और नीति से प्राप्त सिद्धि पराक्रम को अलंकृत करती है ॥ ३२ ॥

शास्त्रमेव विवेकोपाय इत्याह—

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम् ॥३३॥

(अन्वयः) मतिभेदतमस्तिरोहिते, गहने, कृत्यविधौ, विवेकिनां, सुकृतः परिशुद्धः, आगमः दीपः, इव, अर्थदर्शनं, कुरुते ॥३३॥

(मल्लिनाथः) मतीति । मतिभेदः कार्यविप्रतिपत्तिः । मतिभेदस्तम इवेत्युपमितसमासः । दीप इवेत्युपमानुसारात् । तेन तिरोहित आच्छन्नेऽत एव गहने दुरवगाहे कृत्यविधौ कार्यानुष्ठाने विवेकिनां सुकृतः सदभ्यस्तोऽत एव परिशुद्धो निश्चितोऽन्यत्र सुविहितः प्रवातादिदोषरहितश्च आगमः शास्त्रम् । 'आगमः शास्त्र आयाते' इति विश्वः । दीप इवार्थदर्शनं कार्यज्ञानं वस्तुप्रतिभासनं च कुरुते ॥ ३३ ॥

( सुबोधिनी ) मतिभेदतमस्तिरोहिते (मतिभेदः मन्त्रणागतभेदः, स तमः अन्धकार इव, तेन तिरोहिते आच्छन्ने) अत एव, गहने (दुर्बोधे)

कृत्यविधौ (कार्यानुष्ठाने) विवेकिनां (बुद्धिमतां) सुकृतः (सम्यगभ्यस्तः, दीपपक्षे सुष्ठु निर्मितः ; अतएव परिशुद्धः ( निश्चितः, पक्षे प्रवातादिदोष-रहितः ) आगमः (शास्त्रं) दीप इव (अर्थदर्शनं कार्यज्ञानं, पक्षे वस्तुप्रति-भासनं) कुरुते (जनयति) ॥ ३३ ॥

(समासः) अर्थदर्शनम् अर्थस्य दर्शनम् । 'अर्थोऽभिधेयरैवस्तु प्रयो-जननिवृत्तिषु' इत्यमरः ॥ ३३ ॥

(वाच्य०) सुकृतेन परिशुद्धेन आगमेन क्रियते दीपेन इव···।

(सरलार्थः) मन्त्रिणां मतभेदेन कर्त्तव्यानुष्ठाने महान् संशयो जायते । बुद्धिमतां तु सुतरामसन्दिग्धं नीतिशास्त्रं कर्त्तव्यनिर्णये बाधां न जनयति ॥

(हिन्दी) सुमन्त्रणासमिति के मतभेदरूप अन्धकार से आच्छन्न अत एव अति कठिन कार्यानुष्ठान में विद्वानों का किया हुआ परि-श्रम अन्धकार में दीप की तरह कर्तव्यनिर्णय में किसी प्रकार की बाधा नहीं पैदा करता ॥ ३३ ॥

एवं विमृष्यकारिणो दैवादनर्थापातेऽपि न कश्चिदपराध इत्याह—

स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः ।
विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः ॥ ३४ ॥

(अन्वयः) स्पृहणीयगुणैः, महात्मभिः, चरिते, वर्त्मनि, मनः, यच्छतां, विधिहेतुः, आगसाम्, अहेतुः, विनिपातः, अपि, समुन्नतेः, समः ॥ ३४ ॥

(मल्लिनाथः) स्पृहणीयेति । स्पृहणीयगुणैर्लोकश्लाघ्यगुणैर्महात्मभिः सज्जनैश्चरितेऽनुष्ठिते वर्त्मन्याचारे मनो यच्छतां निदधताम् । सन्मार्गेण व्यवहरतामित्यर्थः । विधिहेतुर्दैवनिमित्तकः । 'विधिर्विधाने दैवे च' इत्यमरः अत एवागसामपराधानामहेतुर्विनिपातो दैविकानर्थोऽपि । 'विनिपातोऽव-पाते स्याद्दैवादिव्यसनेऽपि च' इति विश्वः । समुन्नतेरतिवृद्धेः समस्तुल्यः । दैविकेषु पुरुषस्यानुपालभ्यत्वादिति भावः । यथाह कामन्दकः—'यत्तु सम्य-गुपक्रान्तं कार्यमेति विपर्ययम् । पुरुषस्त्वनुपालभ्यो दैवान्तरितपौरुषः॥इति॥

(सुबोधिनी) स्पृहणीयगुणैः (लोकेप्सितगुणैः) महात्मभिः (सज्जनैः) चरिते (अनुष्ठिते) वर्त्मनि (कर्ममार्गे, आचारे) मनः यच्छतां (ददतां—सन्मार्गेण गच्छतामित्यर्थः) विधिहेतुः (दैवकारणकः) अत एव, आगसाम् (अपराधानाम्) अहेतुः (अकारणम्—आत्मदोषरहित इत्यर्थः) विनिपातः (अधःपतनम्) अपि, समुन्नतेः (अभ्युदयस्य) समः (तुल्यो भवति)॥३४॥

(समासः) स्पृहणीयगुणैः=स्पृहणीया गुणाः येषां तैः । विधिहेतुः= विधिः (दैवं) हेतुः (कारणं) यस्य सः ॥३४॥

(वाच्य०)...विनिपातेन...समेन (भूयते) ॥ ३४ ॥

(सरलार्थः) सद्भिराचरितं शास्त्रविहितं पुरुषकारं कुर्वतां पुरुषाणां दैववशात् यदि पराजयो भवति, तदा ते निन्दाभाजो न भवन्ति । तेषां पराजयोऽपि जयसमानतया गण्यते ॥ ३४ ॥

(हिन्दी) इसलिये विद्वानों से आचरित कर्म्म-मार्ग में अपने मन को लगाइये । जो पराभव अपने प्रमाद से नहीं हुआ हो, दैव कारण से हुआ हो—ऐसा पराभव भी उन्नति के ही समान है ॥

जिगीषूणां कर्त्तव्यमाह—

शिवमौपयिकं गरीयसीं फलनिष्पत्तिमदूषितायतीम् ।
विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः ॥३५॥

(अन्वयः) जिगीषवः; विजितक्रोधरयाः (सन्तः) गरीयसीम् अदूषितायतिं, फलनिष्पत्तिं, विगणय्य, पौरुषं, शिवम्, औपयिकं, नयन्ति ॥ ३५ ॥

(मल्लिनाथः) शिवमिति । जिगीषवो विजयेच्छवो नृपा विजितक्रोधरया जितक्रोधवेगाः सन्तो गरीयसीं प्रभूतामदूषितायतिमक्षतोत्तरकालाम् । स्वन्तामित्यर्थः । फलनिष्पत्तिं फलसिद्धिं विगणय्य । फलत्वं निश्चित्येत्यर्थः । पौरुषं पुरुषकारं शिवमनुकूलमौपयिकमुपायम् । विनयादित्वात्स्वार्थे ठक् । पौरुषं उपायादृहस्वत्वं च । नयन्ति प्रापयन्ति । पौरुषमुपायेन योजयन्तीत्यर्थः । नानिश्चितफलं कर्म कुर्वीत इति भावः ।

'न कर्म कुर्यान्मतिमान्सदा वैरानुबन्धि च ॥' इति । नयतिः प्रापणार्थो द्विकर्मकः । अत्र पौरुषस्य कर्तृस्थकर्मत्वेऽप्युपायस्यातथात्वात्क्रोधं विनयत इत्यादिवत् 'कर्तृस्थे चाशरीरे कर्मणि' इत्यात्मनेपदं न भवति ॥३५॥

(सुबोधिनी) जिगीषवः (जेतुमिच्छवो नृपाः) विजितक्रोधरयाः (जित-क्रोधवेगाः सन्तः) गरीयसीं (प्रभूताम्) अदूषितायतिं (शुभोत्तरकालां) फल-निष्पत्तिं (फलसिद्धिं) विगणय्य ( निश्चित्य ) पौरुषं ( पुरुषकारं ) शिवम् (अनुकूलम्) औपयिकम् (उपायं) नयन्ति (प्रापयन्ति, ॥ ३५ ॥

(समासः) जिगीषवः=जेतुमिच्छवः । गरीयसीं=अतिशयेन गुर्वी गरीयसी तां । फलनिष्पत्ति फलस्य निष्पत्तिस्तां । विजितक्रोधरयाः=क्रोधस्य रयः (वेगः) क्रोधरयः, विजितः क्रोधरयो यैः ते । अदूषतायतिम्—अदूषित आयतिर्यस्याः सा ताम् । "उत्तरः काल आयतिः" इत्यमरः ॥३५॥

(वाच्य०) नीयते पौरुषं विजितक्रोधरयैः जिगीषुभिः ॥३५॥

( सरलार्थः ) जयमिच्छन्तो नृपाः महाफललाभे निश्चिते सति अनु-कूलेनोपायेन पुरुषकारं कुर्वन्ति । निष्फले अनिश्चितफले वा कर्मणि ते न यतन्ते ॥ ३५ ॥

( हिन्दी ) विजिगीषु राजा फल सिद्धि का निश्चय करके ही अपने पुरुषार्थ को उसके अनुकूल उपयोग में लाते हैं। सन्दिग्ध कार्य में पुरुषार्थ का उपयोग नहीं करते ॥ ३५ ॥

विजितक्रोधरयत्वमावश्यकमित्याह—

अपनेयमुदेतुमिच्छता तिमिरं रोषमयं धिया पुरः ।
अविभिद्य निशाकृतं तमः प्रभया नांशुमताप्युदीयते ॥३६॥

( अन्वयः ) उदेतुम्, इच्छता, पुरः, रोषमयं, तिमिरं, धिया, अपनेयम्, अंशुमता, अपि, प्रभया, निशाकृतं, तमः, अविभिद्य, न, उदीयते ॥ ३६ ॥

(मल्लिनाथः) अपनेयमिति । उदेतुमभ्युदेतुमिच्छता राज्ञा पुरः प्रथमं रोषमयं रोषादागतम् । 'मयट् च' इति मयट् । तिमिरमज्ञानं धिया विवे-

कबुद्ध्या करणेनापनेयमपनोद्यम् । तथाहि । अंशुमतापि कर्त्रा प्रभया तेजसा करणेन निशाकृतं तमो ध्वान्तमविभिद्य नोदीयते । किन्तु विभिद्यैवेत्यर्थः । सूर्यस्याप्येवं, किमुतान्येषामित्यपिशब्दार्थः । इणो भावे लट् ।

(सुबोधिनी) उदेतुम् (अभ्युदयं प्राप्तुम्) इच्छता (अभिलषता राज्ञा) पुरः (प्रथमं) रोषमयं (रोषादागतं, रोषप्रभवं) तिमिरम् (अज्ञानम्) धिया (विवेकबुद्ध्या) अपनेयम् (निराकर्तव्यम्) तथाहि, अंशुमता (किरणशालिना सूर्येण) अपि, निशाकृतं (रात्रिजनितं) तमः (अन्धकराम्) अविभिद्य (अनिराकृत्य) न उदीयते (न उदयः प्राप्यते) ॥३६॥

(समासः) अपनेयं = अपनेतुं योग्यम् । निशाकृतम् = निशया कृतम् ॥

(वाच्य०) अपनीयेत…इच्छन् तिमिरं रोषमयं…। अंशुमान् …उदेति ॥ ३६ ॥

(सरलार्थः) क्रोधो हि उन्नतेरन्तरायः । अत उन्नतिमिच्छता सर्वथा क्रोधजनितो मोहान्धकारस्त्याज्यः । तथाहि महाप्रतापशाली सूर्योऽपि रात्रेरन्धकारमादौ विनाश्य पश्चादेवोदेति ॥३६॥

(हिन्दी) अभ्युदय चाहने वाले राजा को पहले क्रोध को त्यागना चाहिये । अपने उदय के पूर्व रात्रिकृत अन्धकार को अपने तेज से नाश किये बिना सूर्य भी उदित नहीं होता ॥ ३६ ॥

ननु दुर्बलस्यैवमस्तु । बलीयसस्तु क्रोधादेव कार्यसिद्धिरित्यत आह—

बलवानपि कोपजन्मनस्तमसो नाभिभवं रुणद्धि यः ।
क्षयपक्ष इवैन्दवीः कलाः सकला हन्ति स शक्तिसम्पदः ॥३७॥

(अन्वयः) बलवान्, अपि, यः, कोपजन्मनः, तमसः, अभिभवं न, रुणद्धि, सः, क्षयपक्षे, ऐन्दवीः, कलाः, इव, सकलाः, शक्तिसम्पदः, हन्ति ॥ ३६ ॥

(मल्लिनाथः) बलवानिति । बलवाञ्छूरोऽपि यः । कोपाज्जन्म यस्य तस्य कोपजन्मनः 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' । इति वामनः । तमसो मोहस्य कृद्योगात्कर्तरि षष्ठी । अभिभवमाक्रान्ति न

रुणद्धि । न निवारयति । स नृपः । क्षयस्य पक्षः क्षयपक्षः तस्मिन् क्षयपक्षे कृष्णपक्ष ऐन्दवीरिन्दुसम्बन्धिनीः कला इव । 'कला तु षोडशो भागः' इत्यमरः । सकलाः समग्राः शक्तिसम्पदः प्रभुमन्त्रोत्साहशक्तीस्तिस्रोऽपि हन्ति नाशयति । अन्धस्य जङ्घाबलमिव क्रोधान्धस्य लोकोत्तरमपि सामर्थ्यं व्यर्थमेवेत्यर्थः । अत्र कालस्य सर्वकारणत्वात्क्षयपक्षस्य कलाक्षयकारित्वमस्त्येव । तमसस्तु तत्कालविजृम्भणात्तथा व्यपदेशः ॥३७॥

(सुबोधिनी) बलवान् (विक्रमशाली) अपि, यः (नृपः) कोपजन्मनः (कोपप्रभवस्य) तमसः (मोहस्य) अभिभवम् (आक्रमणं) न रुणद्धि (न निवारयति) सः क्षयपक्षे (कृष्णपक्षे) ऐन्दवीः (चन्द्रसम्बन्धिनीः) कलाः, इव, सकलाः (समग्राः) शक्तिसम्पदः (प्रभावोत्साहमन्त्रजन्यत्रिविधशक्तिरूपान्विभवान्) हन्ति (नाशयति) ॥३७॥

(समसः) कोपजन्मनः = कोपात् जन्म यस्य तस्य । क्षयपक्षे = क्षयस्य पक्षः तस्मिन् । ऐन्दवीः = इन्दोरिमा ऐन्दवीः । शक्तिसम्पदः = शक्तय एव सम्पदः ताः शक्तिसम्पदः ॥३७॥

(वाच्य०) बलवता अभिभवः—रुध्यते येन । हन्यन्ते तेन शक्तिसम्पदः ॥३७॥

(सरलार्थः) बलवान् सन्नपि बलदर्पात् यः क्रोधं न शमयति, कृष्णपक्षे चान्द्रमस्यः कला इव तस्य सर्वाः शक्तयो नश्यन्ति ॥३७॥

(हिन्दी) बलवान् भी जो राजा क्रोध के आक्रमण को नहीं रोकता हैं, उसकी सारी शक्तिसम्पत्ति, कृष्णपक्ष में चन्द्रमा की कला की तरह क्षीण हो जाती है ॥३७॥

विमृश्यकारिणः क्रियाप्रकारमाह:—

समवृत्तिरुपैति मार्दवं समये यश्च तनोति तिग्मताम् ।
अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः ॥३८॥

(अन्वयः) यः समवृत्तिः, (सन्) समये, मार्दवं, उपैति, तिग्मतां, च तनोति सः, मेदिनीपतिः, विवस्वान्, इव, ओजसा, लोकम् अधितिष्ठति ॥३८॥

(मल्लिनाथः) समेति । यः समा नातिमृदुर्नातितिग्मा वृत्तिर्यस्य स समवृत्तिः सन्समये सत्यवसरे मार्दवं मृदुवृत्तित्वमुपैति तिग्मतां तीक्ष्णवृत्तित्वं च तनोति । स मेदिनीपतिर्विवस्वानिव ओजसा तेजसा लोकमधितिष्ठत्याक्रामति । सूर्योऽपि ऋतुभेदेन समवृत्तिरित्यादि योज्यम् ॥३८॥

(सुबोधिनी) यः, समवृत्तिः (समा नातिमृदुः नातितिग्मा च वृत्तिर्यस्य तथाभूतः सन्) समये (उचितावसरे) मार्दवं (मृदुताम्) उपैति (प्राप्नोति) तिग्मतां (तीक्ष्णत्वं) च तनोति (विस्तारयति) सः मेदिनीपतिः (राजा) विवस्वान् (सूर्य्यः) इव, ओजसा (तेजसा) लोकं (भुवनम्) अधितिष्ठति (आक्रामति) ॥३८॥

(समासः) समवृत्तिः=समा वृत्तिर्यस्य सः । मेदिनीपतिः=मेदिन्याः पतिः ॥

(वाच्य०) समवृत्तिना उपेयते मार्दवं...येन...तन्यते (तायते) तिग्मता । अधिष्ठीयते लोकः...तेन विवस्वता इव मेदिनीपतिना

(सरलार्थः) यो नृपः, रविरिव समये मृदुतां, समये तीक्ष्णतां च प्रकाशयति, स सर्वलोकम् अभिभवति ॥३८॥

(हिन्दी) जो राजा मौका देखकर कभी कठिन और कभी मृदु व्यवहार करता है वह राजा सूर्य की तरह समस्त लोक पर अपना प्रभुत्व रखता है ॥३८॥

उक्तान्यथाकरणेऽनिष्टमाह—

क्व चिराय परिग्रहः श्रियां क्व च दुष्टेन्द्रियवाजिवश्यता ।
शरदभ्रचलाश्चलेन्द्रियैरसुरक्षा हि बहुच्छलाः श्रियः ॥३९॥

(अन्वयः) श्रियां, चिराय, परिग्रहः, क्व, दुष्टेन्द्रियवाजिवश्यता, च क्व । हि, शरदभ्रचलाः, बहूच्छलाः, श्रियः, चलेन्द्रियैः, असुरक्षाः ॥

(मल्लिनाथः) क्वेति । श्रियां संपदां चिराय बहुकालं परिग्रहः स्वायत्तीकरणं क्व । इन्द्रियाणि वाजिन इवेति समासः । दुष्टानाममार्गधाविनामिन्द्रियवाजिनां वश्यो वशंगतस्तस्य भावस्तत्ता च क्व । नोभयमेकत्र तिष्ठतीत्यर्थः । कुतः । हि यस्माच्छरदभ्रवच्चलाश्चञ्चलाः । किञ्च बहुच्छला

बहुव्याजाः। श्रियः संपदः। चलेन्द्रियैरसुरक्षा रक्षितुमशक्याः। कथञ्चित्प्राप्ता वपि श्रियो नाविनीतेषु तिष्ठन्तीत्यर्थः। वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः।

(सुबोधिनी) श्रियां (सम्पदां) चिराय (बहुकालं) परिग्रहः (स्वीकरणं) क्व (कुत्र) दुष्टेन्द्रियवाजिवश्यता (दुष्टानां वाजिनाम् इन्द्रियरूपाश्वानां वश्यता वशीभूतता) च क्व (कुत्र, उभयोर्महदन्तरमित्यर्थः) हि (यतः) शरदभ्रचलाः (शरन्मेघवत् चञ्चलाः) बहुच्छलाः (बहुव्याजाः, नानाछिद्र-समन्विताः) श्रियः (सम्पदः, चलेन्द्रियैः (अजितेन्द्रियैः पुरुषैः) असुरक्षाः (रक्षितुमशक्या भवन्ति) ॥३९॥

(समासः) वशं गता इति वश्याः तेषां भावः वश्यता। इन्द्रियाण्येव वाजिनः, इन्द्रियवाजिनः, दुष्टा इन्द्रियवाजिनः तेषां वश्यता। शरद-भ्रचलाः= शरदः अभ्राणि, तानीव चलाः। "अभ्रं मेघो वारिवाहः" इत्यमरः। चलेन्द्रियैः=इन्द्रस्य आत्मनः लिङ्गानि इन्द्रियाणि, चलानि इन्द्रियाणि येषां तैः। बहुच्छलाः=बहूनि छलानि यासां ताः ॥३९॥

(वाच्य०) क्व परिग्रहेण भूयते, क्व दुष्टेन्द्रियवाजिवश्यतया भूयते, शरदभ्रचलाभिः बहुच्छलाभिः श्रीभिः असुरक्षाभिः भूयते॥

(सरलार्थः) स्वभावतोऽतिचञ्चला बहुच्छिद्रा च लक्ष्मीः जितेन्द्रिया-नपि पुरुषान् चिरं न भजते, किमुत अजितेन्द्रियान्। अतो जितेन्द्रियैः सद्भिर्नृपैः सर्वविधेषु छिद्रेषु सर्वदा सावधानैर्भवितव्यम् ॥३९॥

(हिन्दी) लक्ष्मी का दीर्घकाल पर्यन्त अपने वश में रखना और दुष्ट इन्द्रियरूप घोड़ों को वश करना बहुत असभव है। शरत्कालीन मेघ के समान अस्थिर लक्ष्मी चञ्चल इन्द्रियवालों से सुरक्षित नहीं हो सकती ॥३९॥

क्रोधस्य दुष्टतामुक्त्वा तस्य त्यागमुपदिशति—

किमसामयिकं वितन्वता मनसः क्षोभमुपात्तरंहसः।
क्रियते पतिरुच्चकैरपां भवता धीरतयाधरीकृतः ॥४०॥

(अन्वयः) उपात्तरंहसः, असामयिकं, क्षोभं, वितन्वता, भवता, धीरतया अधरीकृतः, अपां, पतिः, किम्, उच्चकैः, क्रियते॥

(मल्लिनाथः) किमिति । उपात्तरंहसः प्राप्तत्वरस्य मनसः । समयोऽस्य प्राप्तः सामयिकः । 'समयस्तदस्य प्राप्तम्' इति ठञ् । स न भवतीत्यसामयिकस्तमप्राप्तकालं क्षोभं वितन्वता भवता धीरतया धैर्यगुणेन । 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु' इति रसिकाः । अधरीकृतस्तिरस्कृतः । प्रागिति शेषः । अपां पतिः समुद्रः किं किमर्थमुच्चकैरधिकः क्रियते न पराजितं पुनरुच्चकैः कुर्यादिति भावः । अत्र वितन्वतेति भीमविशेषणत्वेन अपाम्पतिपदार्थस्योच्चैः करणे हेतुत्वोक्त्वा काव्यलिङ्गमलङ्कारः॥

(सुबोधिनी) उपात्तरंहसः (प्राप्तवेगस्य, शत्रुशासनाय त्वरान्वितस्य) मनसः (चित्तस्य) असामयिकम् (अप्राप्तकालं) क्षोभं ( चाञ्चल्यं ) वितन्वता (प्रकाशयता) भवता (त्वया) धीरतया (धैर्येण) अधरीकृतः (नीचैः कृतः, पराभूतः) अपां पतिः (समुद्रः) किं (कथम्) उच्चकैः (अधिकः) क्रियते ॥४०॥

(समासः) उपात्तरंहसः = उपात्तं = भृशं गृहीतं, रंहः वेगो येन उपात्तरंहाः, तस्य । 'रंहस्तरसी तु रयः स्यदः, जवः' ('वेगः प्रवाहजवयोरपि' इत्यमरः) धीरतया = धीरस्य भावः; धीरता तया ॥४०॥

(वाच्य०) मनसः क्षोभं वितन्वन् भवान् धीरतया अधरीकृतम् अपां पतिं किम् उच्चकैः करोति ॥४०॥

(सरलार्थः) यस्त्वं पूर्वं समुद्रादप्यधिकतरधैर्यशाली आसीः । सः कथमिदानीम् असमये चित्तचाञ्चल्यं प्रकटयन् अधीरो भवसि ॥४०॥

(हिन्दी) आपने अपने धैर्य से समुद्र के भी गाम्भीर्य को नीचा दिखा दिया था । अब वे मौके अपने चित्तके उद्वेग को प्रगट कर फिर उसे ऊपर उभड़ने का मौका क्यों देते हो ॥४०॥

श्रुतमप्यधिगम्य ये रिपून् विनयन्ते न शरीरजन्मनः ।
जनयन्त्यचिराय सम्पदामयशस्ते खलु चापलाश्रयम् ॥४१॥

(अन्वयः) ये श्रुतम् अधिगम्य अपि शरीरजन्मनः रिपून् न विनयन्ते, ते खलु अचिराय सम्पदां चापलाश्रयम् अयशः जनयन्ति॥

(मल्लिनाथः) श्रुतमिति । किञ्च । ये श्रुतं शास्त्रमधिगम्यापि शरीर-जन्मनः शरीरप्रभवान्रिपून्कामक्रोधादीन्न विनयन्ते न नियच्छन्ति । 'कर्तृस्थे चाशरीरे कर्मणि' इत्यात्मनेपदम् । ते खल्वचिराय सम्पदां चापलाश्रयमस्थैर्यनिबन्धनमयशो दुष्कीर्तिं जनयन्ति आश्रयदोषादस्थैर्यं सम्पदां, न स्वदोषादित्यर्थः । अजितारिषड्वर्गस्य कुतः सम्पद् इति भावः॥

(सुबोधिनी) ये श्रुतं (शास्त्रम्) अधिगम्य (प्राप्य, शिक्षित्वा अपि) शरीरजन्मनः ( देहप्रभवान् ) रिपून् कामक्रोधादीन् षट् शत्रून् ) न विनयन्ते (न वशीकुर्वन्ति) ते खलु [ते एव] अचिराय [शीघ्रं] सम्पदां [श्रियां] चापलाश्रयम् [चाञ्चल्यनिबन्धनम् ] अयशः [दुष्कीर्तिं] जनयन्ति [उत्पादयन्ति] ॥ ४१ ॥

[समासः] शरीरजन्मनः = शरीरात् जन्म येषां तान्। चापलाश्रयम्= [चपलस्य भावः चापलम् ] चापलम् आश्रयो यस्य तत् ॥ ४१ ॥

(वाच्य०)यैः शरीरजन्मानः रिपवः न विनीयन्ते, तैः सम्पदां चापलाश्रयम् अयशः जन्यते ॥ ४१ ॥

[ सरलार्थः ] लक्ष्मीः स्वदोषात् न चञ्चला, किन्तु आश्रयदोषादेव चञ्चला भवति । ये कामादिरिपून् न जयन्ति, ते एव तादृशेन स्वदोषेण लक्ष्म्याः चाञ्चल्यदोषमुत्पादयन्ति । अतः अजितक्रोधः सम्पदं न प्राप्नोति ॥

( हिन्दी ) जो शास्त्र पढ़कर भी शरीर में रहने वाले काम क्रोधादि छ शत्रुओं को अपने अधिकार में नहीं कर पाते वे लक्ष्मी को कभी भी अपने वश में नहीं रख सकते ॥ ४१ ॥

क्रोधात् कार्यहानिरित्याशयेनाह—

अतिपातितकालसाधना स्वशरीरेन्द्रियवर्गतापनी ।
जनवन्न भवन्तमक्षमा नयसिद्धेरपनेतुमर्हति ॥ ४२ ॥

(अन्वयः) अतिपातितकालसाधना, स्वशरीरेन्द्रियवर्गतापनी, अक्षमा, भवन्तं, जनवत्, नयसिद्धेः, अपनेतुं, न, अर्हति ॥४२॥

[मल्लिनाथः] अतिपातितेति । अतिपातितान्यतिक्रान्तानि कालः समयोऽनुरूपः साधनानि सहायादीनि यया सा तथोक्ता । तापयतीति तापनी।

कर्तरि ल्युट् । टित्वान्ङीप् । स्वस्य यच्छरीरमिन्द्रियवर्गश्च तयोस्तापन्यक्षमा क्रोधो भवन्तं जनवत्पृथग्जनमिव । 'तेन तुल्यं'—इति वतिप्रत्ययः । तेनेवार्थो लक्ष्यते । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययम् । नयसिद्धेर्नयसाध्यफलादपनेतुं पृथक्कर्तुं नार्हति । असमयक्रोधस्यात्मसन्तापातिरिक्तं फलं नास्तीत्यर्थः ॥ ४२ ॥

[सुबोधिनी] अतिपातितकालसाधना [अतिपातितानि अतिक्रान्तानि कालः अनुरूपसमयः साधनानि सहायादीनि च यया तथाभूता, असमये असहायावस्थायां चोत्पन्ना इत्यर्थः] स्वशरीरेन्द्रियवर्गतापनी [स्वस्य शरीरस्य इन्द्रियगणस्य च सन्तापजनिका] अक्षमा [क्रोधः] भवन्तं [त्वां] जनवत् (पामरजनमिव साधारणलोकम् इव) नयसिद्धेः (नीतिसाध्यफलात्) अपनेतुं (भ्रंशयितुं) न अर्हति (न युज्यते) ॥ ४२ ॥

(समासः) कालश्च साधनानि च कालसाधनानि, अतिपातितानि कालसाधनानि यया सा (अति-पत + णिच् + क्त) । स्वशरीरेन्द्रियवर्गतापनी = (तापयतीति तापनी तप + णिच् + कर्तरि ÷ ल्युट्) शरीरं च इन्द्रियवर्गश्च, शरीरेन्द्रियवर्गौ, तयोः तापनी । नयसिद्धेः = नयस्य सिद्धिः तस्याः (अपादाने पञ्चमी) ॥ ४२ ॥

(वाच्य०) अतिपातितकालसाधनया स्वशरीरेन्द्रियवर्गतापन्या अक्षमया भवान् न अर्ह्यते ॥ ४२ ॥

(सरलार्थः) इतरलोक इव भवान् असमये असहायावस्थायां च क्रोधवशो भूत्वा देहेन्द्रियेषु सन्तापं माऽनुभूः, विफलोद्यमश्च मा भूः ॥

(हिन्दी) शरीर और इन्द्रिय वर्ग को जलाने वाली अक्षमा साधारण जन की तरह आपको भी नीति पथ से न हटावे॥५२॥

क्रोधस्य दोषं प्रदर्श्य क्षमाया गुणानाह—

उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः ।
अनपायि निबर्हणं, द्विषां न तितिक्षासममस्ति साधनम् ॥४३॥

(अन्वयः) आयतेः, भृशम्, उपकारकं, भूरिणः, कर्म्मफलस्य, प्रसवः, अनपायि, द्विषां, निबर्हणं, साधनं, तितिक्षासमं, न, अस्ति॥

(मल्लिनाथः) उपकारकमिति। आयतेरुत्तरकालस्य भृशमत्यन्तमुपकारकम्। स्थिरफलहेतुरित्यर्थः। भूरिणः प्रभूतस्य कर्मफलस्य। प्रसूयतेऽनेनेति प्रसवः कारणम्। अपायि न भवतीत्यनपायि स्वयमविनश्यदेव द्विषां निबर्हणं विनाशकमेवंगुणकं साधनं तितिक्षासमं क्षमातुल्यं नास्ति। 'शान्तिः क्षमा तितिक्षा च' इत्यमरः। 'तिज निशाने' इति धातोः। गुप्तिज्किद्भ्यः सन्' इति क्षमार्थे सन्प्रत्ययः। तितिक्षासममित्यनुक्तोपमेया समास आर्थी लुप्तोपमा, भृशानपायिशब्दैः साधनान्तरवैलक्षण्याद्व्यतिरेकश्च व्यज्यते। भेदप्राधानान्य उपमानादुपमेयस्याधिक्ये विपर्यये च व्यतिरेकः॥ ४३ ॥

(सुबोधिनी) आयतेः (उत्तरकालस्य) भृशम् (अत्यन्तम्) उपकारकं (हितकरम्-उत्तरकाले शुभजनकमित्यर्थः) भूरिणः (प्रभूतस्य) कर्म्मफलस्य, प्रसवः (उत्पादकम्) अनपायि (अविनाशि, स्वयमविनष्टं सत्) द्विषां (शत्रूणां) निबर्हणं (नाशकं) साधनम् (उपायः) तितिक्षासमं (क्षमातुल्यं) नास्ति॥ ४३ ॥

(समासः) कर्म्मणः फलं कर्म्मफलं तस्य। (अपायोऽस्त्य अस्यपायि) न अपायि अनपायि। तितिक्षासमम् = तितिक्षया समम्॥ ४३ ॥

(वाच्य०) उपकारकेण प्रसवेन अनपायिना निबर्हणेन साधनेन तितिक्षासमेन न भूयते॥ ४३ ॥

(सरलार्थः) क्षमासदृशः अन्य उपायो नास्ति येन शत्रून् निपात्य प्रभूतं कर्म्मफलं प्राप्यते॥ ४३ ॥

(हिन्दी) भविष्यकाल को उत्तम बनाने वाला, चिरस्थायी और हिंसादोष रहित शत्रुओं का नाश करने वाला शान्ति के समान दूसरा कोई साधन नहीं है॥ ४३ ॥

ननु तितिक्षया कालक्षेपे दुर्य्योधनः सर्वान् राज्ञो वशीकुर्य्यादित्याह—

प्रणतिप्रवणान्विहाय नः सहजस्नेहनिबद्धचेतसः।
प्रणमन्ति सदा सुयोधनं प्रथमे मानभृतां न वृष्णयः॥ ४४ ॥

(अन्वयः) सहजस्नेहनिबद्धचेतसः, मानभृतां, प्रथमे, वृष्णयः, प्रणतिप्रवणान्, नः, विहाय, सुयोधनं, सदा, न, प्रणमन्ति॥४४॥

( मल्लिनाथः ) प्रणतीति । सहजस्नेहेनाकृत्रिमप्रेम्णा निबद्धचेतसोऽस्मासु गाढं लग्नचित्ताः । सुयोधने तु न तथेति भावः । किं च मानभृतामहङ्कारिणां प्रथमेऽग्रेसराः । सुयोधनस्तु ततोऽपीति भावः । वृष्णयो यादवाः प्रणतिप्रवणान्प्रणामपरान् । सुयोधनस्तु न तथेति भावः । नोऽस्मान्विहाय सुयोधनं सदा न प्रणमन्ति न नमन्ति नानुसरन्ति । किन्तु कार्यकाले त्यक्ष्यन्त्येवेत्यर्थः । सति यादवविग्रहे न किञ्चिदस्माकमसाध्यं भवेदिति भावः । अनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४४ ॥

( सुबोधिनी ) सहजस्नेहनिबद्धचेतसः (स्वाभाविकेन स्नेहेन अस्मासु नितरामासक्तचित्ताः) मानभृताम् ( वीर्यशौर्याभिजात्यादिभिः अहङ्कारवतां) प्रथमे (अग्रगण्याः) वृष्णयः (यादवाः) प्रणतिप्रवणान् (प्रणामपरान्, अनुगतानित्यर्थः) नः (अस्मान्) विहाय (त्यक्त्वा) सुयोधनं (दुर्योधनं) सदा (सर्वदा) न प्रणमन्ति न नमन्ति, नानुगच्छन्ति, कार्यानुरोधेन कदाचिदेव अनुगच्छन्तीत्यर्थः ॥ ४४ ॥

(समासः) प्रणतिप्रवणान्=प्रणत्या प्रवणाः तान् । सहजस्नेहनिबद्धचेतसः=सहजः स्नेहः, तेन निबद्धानि चेतांसि येषां ते । मानभृताम्=मानं बिभ्रति ये तेषाम् ॥ ४४ ॥

(वाच्य०) सहजस्नेहनिबद्धचेतोभिः मानभृतां प्रथमैः वृष्णिभिः सुयोधनः सदा न प्रणम्यते ॥ ४४ ॥

( सरलार्थः ) यदुकुलकन्यायाः कुन्त्या गर्भजाता वयमिति कृत्वा यादवानामस्मान् प्रति अकृत्रिमः स्नेहः, दुर्योधनेऽपि तथा । अपि च वयं तेषामनुगताः, दुर्योधनस्तु न । ते च दुर्योधनादपि अधिकतरमानिनः । अतस्ते कार्यानुरोधेन कदाचिद् दुर्योधनमनुसरन्तोऽपि युद्धकाले तं परित्यज्य अस्मत्पक्षमेवाश्रयिष्यन्ति ॥ ४४ ॥

(हिन्दी) स्वाभाविकस्नेह के कारण हम लोगों पर अत्यन्त आसक्त,मानियों के सरदार यादव हम लोगों की नम्रता के कारण दुर्योधन के पक्ष पर ही बराबर डटे न रहेंगे। समय आने पर उस पक्ष को छोड़कर इधर ही आवेंगे ॥ ४४ ॥

सुहृदः सहजास्तथेतरे मतमेषां न विलङ्घयन्ति ये।
विनयादिव यापयन्ति ते धृतराष्ट्रात्मजमात्मसिद्धये ॥४५॥

(अन्वयः) एषां, ये, सहजाः, सुहृदः, तथा, इतरे, मतं, न, विलङ्घयन्ति, ते, आत्मसिद्धये, धृतराष्ट्रात्मजं, विनयाद्, इव, यापयन्ति ॥ ४५ ॥

(मल्लिनाथः) सुहृद इति। किञ्चैषां वृष्णीनां ये सहजाः, सहजाताः। मातृपितृपक्षा इत्यर्थः 'अन्येष्वपि दृश्यते' इति डप्रत्ययः। सुहृदो मित्राणि तथेतरे कृत्रिमसुहृदश्च मतं वृष्णिपक्षं न विलङ्घयन्ति नातिक्रामन्ति। ते द्वयेऽपि नृपाः दुर्य्योधनोपजीविनोऽपीति भावः। आत्मजीवनार्थं धृतराष्ट्रात्मजं दुर्योधनं विनयादानुकूल्यादिव यापयन्ति कालं गमयन्ति। कार्यकाले तु वृष्णिपक्षप्रवेशिन एवेत्यर्थः। यातेर्ण्यन्तात्लट्। 'अर्तिह्री-' इत्यादिना पुगागमः ॥ ४५ ॥

(सुबोधिनी) एषां (वृष्णीनां) ये सहजाः (अकृत्रिमाः) सुहृदः (मित्राणि, मातृपितृबान्धवा इत्यर्थः) तथा इतरे (ये कृत्रिमाः सुहृदः) मतम् (एषां वृष्णीनाम् अभिप्रायं) न विलङ्घयन्ति (न अतिक्रामन्ति) ते उभये राजानः आत्मसिद्धये (स्वकार्य्यसाधनाय) धृतराष्ट्रात्मजं (दुर्य्योधनं) विनयाद् इव (कपटविनयं प्रकाश्येत्यर्थः) यापयन्ति (वर्त्तयन्ति, उपजीवन्तीत्यर्थः) ॥

(समासः) आत्मसिद्धये = आत्मनः सिद्धिः तस्यै ॥ ४५ ॥

(वाच्य०) एषां सहजैः तथा इतरैः यैः सुहृद्भिः मतं न विलङ्घ्यते, तैः आत्मसिद्धये धृतराष्ट्रात्मजः याप्यते ॥ ४५ ॥

(सरलार्थः) यादवानां ये कृत्रिमा अकृत्रिमाश्च सुहृदः तेऽपि स्वार्थसाधनाय साम्प्रतं दुर्य्योधनमनुवर्तमाना अपि यादवानां मतानुवर्तित्वात् कालेऽस्मत्पक्षमेवाश्रयिष्यन्ति ॥ ४५ ॥

(हिन्दी) इनके मातृपितृ पक्षवाले जो सहज मित्र हैं और कृत्रिम मित्र भी जो वृष्णि पक्ष को लङ्घन नहीं करते हैं, वे अपने निर्वाह के लिये जब तक कि युद्ध आरंभ नहीं होता है तभी तक किसी भी तरह दुर्योधन के पक्ष को मानकर चल रहे हैं॥४५॥

नायमभियोगकाल इत्याशयेनाह—

अभियोग इमान्महीभुजो भवता तस्य कृतः कृतावधेः ।
प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव ॥४६॥

(अन्वयः) कृतावधेः, तस्य, भवता, कृतः, अभियोगः, इमान्, महीभुजः, हरिदश्वः, कमलाकरान्, इव, समुत्पतन्, प्रविघाटयिता॥

(मल्लिनाथः) अभियोग इति । कृतावधः परिभाषितकालस्य । 'अवधिस्त्ववधाने स्यात्सीम्नि काले बिलेऽपि च' इति विश्वः । तस्य सुयोधनस्य । कर्मणि षष्ठी । भवता कृतः अवधिमनपेक्ष्येति शेषः । अभियोगः । आर्द्राभिभव इति यावत् 'अभियोगस्तु शपथे स्यादार्द्रे च पराभवे' इति विश्वः । इमान्पूर्वोक्तान्महीभुजो राज्ञो हरिदश्व उष्णरश्मिः कमलाकरानिव समुत्पतन्नुद्यन्नेव प्रविघाटयिता भेत्स्यति । घाटयतेर्भौवादिकाल्लुट् । चौरादिकस्य तु 'मितां ह्रस्वः' इति ह्रस्वत्वं स्यात् ॥ ४६ ॥

(सुबोधिनी) कृतावधेः (निर्धारितसमयस्य, त्रयोदश वर्षान् व्याप्य वनवासं समाप्य प्रत्यागतेभ्यो युष्मभ्यं राज्यं दास्यामीति कृतनियमस्य ) तस्य (दुर्य्योधनस्य) भवता (त्वया) कृतः, अभियोगः (युद्धार्थमाक्रमणं) इमान् (पूर्वोक्तान्) महीभुजः (राज्ञः) हरिदश्वः (सूर्य्यः) कमलाकरान् (पद्मनिचयान्) इव, समुत्पतन् (उद्यन्) प्रविघाटयिता (भेत्स्यति) ॥४६॥

( समासः ) कृतावधेः = कृतः कल्पितः अवधिः वनवासादिसमयस्य परिसमाप्तिकालः येन तस्य । हरिदश्वः = हरितः (हरिद्वर्णाः) अश्वा यस्य सः । 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः । कमलाकरान् = कमलानाम् आकराः तान् । 'आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते' इति मेदिनी ॥ ४६ ॥

(वाच्य०) भवता कृतेन तस्य अभियोगेन हरिदश्वेन कमलाकरा इव समुत्पतता इमे महीभुजः प्रविघाटयितारः ॥ ४६ ॥

(सरलार्थः) समयपरिरक्षणात् प्राग् यदि भवान् दुर्योधनमाक्रमिष्यति तदा सर्वे राजानो विरक्ताः सन्तः अस्मान् परित्यक्ष्यन्ति ॥ ४६ ॥

(हिन्दी ) और, १३ वर्ष की अवधि जो अपने सन्धिपत्र में लिखी गई है उसके भीतर यदि शत्रुओं के साथ हमलोग छेड़छाड़ करें तो आपस में ही मतभेद हो जायगा ।।४६।।

वृष्णिपक्षेतरान् उद्दिश्याह—

उपजापसहान्विलङ्घयन् स विधाता नृपतीन्मदोद्धतः ।
सहते न जनोऽप्यधः क्रियां किमु लोकाधिकधाम राजकम्।।४७।।

(अन्वयः) मदोद्धतः, सः, नृपतीन्, विलङ्घयन्, उपजापसहान्, विधाता । जनः, अपि, अधःक्रियां, न, सहते, लोकाधिकधाम, राजकं किमु ।। ४७ ।।

(मल्लिनाथः) उपजापेति । मदोद्धतः स दुर्योधनो नृपतीनन्यान्नृपान्विलङ्घयन्मदादवमानयन् । सहन्त इति सहाः । पचाद्यच् । उपजापस्य सहान्भेदयोग्यान् । "समौ भेदोपजापौ" इत्यमरः । विधाता विधास्यति । दधातेर्लुट् । अवमानितो जनः सुभेद्य इति भावः । न च ते सहिष्णव इत्याह—जनः प्राकृतोऽप्यधः क्रियामपमानं न सहते। लोकोत्तरप्रतापं राजकं राजसमूहः गोत्रोक्षोष्ट्र इत्यादिना वुञ्प्रत्ययः। किमु । न सहत इति किं वक्तव्यमित्यर्थः । तथा सति कृत्स्नमेव राजमण्डलमस्मानेवावलम्बिष्यत इति भावः ।। ४७ ।।

(सुबोधिनी) मदोद्धतः (गर्वितः) सः (दुर्योधनः) नृपतीन् ( अन्यान् नृपान्) विलङ्घयन् (गर्वाद् अवमानयन्) उपजापसहान् (अस्माकं भेदयोग्यान्) विधाता (करिष्यति जनः (पामरः, इतरजनः) अपि, अधःक्रियाम् (अवमाननां न सहते (न क्षमते), लोकाधिकधाम (असाधारणप्रतापं) राजकं (राजसमूहः) किमु (न सहते इति किं वक्तव्यमित्यर्थः) ।।४७।।

(समासः) उपजापसहान्=(सहन्ते इति सहाः—पचाद्यच्) उपजापस्य सहाः तान् । 'समौ भेदोपजापौ'इत्यमरः । मदोद्धतः=मदेन उद्धतः । लोकाधिकधाम=लोकेभ्यः अधिकं धाम यस्य तत् । 'गृहदेहत्विट्प्रभावा धामानि' इत्यमरः ।। ४७ ।।

(वाच्यपरिवर्तनम्) मदोद्धतेन नृपतयः, उपजापसहाः विधातारः । जनेनापि अधःक्रिया न सह्यते, किमु लोकाधिकधाम्ना राजकेन ॥४७॥

(सरलार्थः) गर्वितस्वभावः दुर्य्योधनः अन्यानपि स्वपक्षान् राज्ञः कदाचित् अवमानयिष्यत्येव । ते चापि महाप्रभावास्तत्कृतामवमाननां न सहिष्यन्ते । सुतरां स्वल्पायासेनैव अस्माभिर्भेदमुपागता अस्मत्पक्षा भविष्यन्ति ॥५७॥

(हिन्दी) मदमस्त वह दुर्योधन राजाओं को घृणा की दृष्टि से देखता हुआ स्वयं उन्हे अपने से भिन्न कर देगा। साधारण जन भी जब अपमान सहन नहीं कर सकते, तब प्रबल प्रतापी राजसमूह उसे सहने के लिये कब तयार हो सकता है ? ॥ ४७ ॥

ननु सखीनिवेत्यादिवनेचरोक्त्या तस्य मदसम्भावना कथमित्यत्राह—

असमापितकृत्यसम्पदां हृतवेगं विनयेन तावता ।
प्रभवन्त्यभिमानशालिनां मदमुत्तम्भयितुं विभूतयः ॥ ४८ ॥

(अन्वयः) असमापितकृत्यसम्पदाम्; अभिमानशालिनां, विभूतयः, तावता, विनयेन, हृतवेगं, मदम्, उत्तम्भयितुं, प्रभवन्ति ॥४८॥

(मल्लिनाथः) असमापितेति । असमापितकृत्यसम्पदामकृतकृत्यानामतोऽभिमानशालिनामहङ्कारिणां विभूतयः सम्पद एव तावता स्वल्पेन विनयेन कार्यवशादारोपितेनेति शेषः । हृतवेगं प्रतिबद्धवेगं नतु स्वरूपतो हृतं मदमुत्तम्भयितुं वर्धयितुं प्रभवन्ति । सर्वथा दुर्जनं सम्पदो विकारयन्तीति भावः ॥४८॥

(सुबोधिनी) असमापितकृत्यसम्पदाम् (अकृतकृत्यानाम्) अभिमानशालिनाम् (अभिमानेन श्लाघनशीलानां, अहङ्कारिणामित्यर्थः) विभूतयः (विविधाः सम्पद एव) तावता (कार्य्यवशात् तादृशेन कपटपूर्णेन) विनयेन हृतवेगं (उपशान्तवेगं नतु स्वरूपतो नष्टं) मदं (गर्वम्) उत्तम्भयितुं (वर्धयितुं) प्रभवन्ति (समर्था भवन्ति) ॥४८॥

(समासः) असमापितकृत्यसम्पदाम् = कृत्यानि सम्पद इव कृत्यसम्पदः; असमापिताः कृत्यसम्पदः यैः तेषाम् । हतवेगं = हतो वेगः यस्य तम् । अभिमानशालिनाम् = अभिमानेन शालन्ते (शोभन्ते) ये तेषाम् (णिनिः) ॥

(वाच्य०) विभूतिभिः......प्रभूयते ॥ ४८ ॥

(सरलार्थः) ये गर्विताः तेषां कपटविनयेन प्रतिरुद्धवेगमपि मदं सम्पद एव वर्द्धयन्ति ॥४८॥

(हिन्दी) अहंकारी राजाओं की विभूति ही कार्यवश तात्कालिक रुके हुए मद को बढ़ा सकती है ॥४८ ॥

अथ मदस्यानर्थहेतुतां युग्मकेनाह—

मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढता ।
अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जनः ॥ ४९ ॥

(अन्वयः) मदमानसमुद्धतं, नृपं, मूढता, नियमेन, न वियुङ्क्ते अतिमूढः नयात्, उदस्यते । नयहीनात्, जनः, अपरज्यते ॥ ४९ ॥

(मल्लिनाथः) मदेति । मदमानाभ्यां दर्पाहङ्काराभ्यां समुद्धतं नृपं मूढता कार्यापरिज्ञानं नियमेनावश्यं न वियुङ्क्ते न विमुञ्चति । अतिमूढो नयान्नीतिमार्गादुदस्यत उत्क्षिप्यते । कर्मकर्तरि लट् । नयहीनाज्जनोऽपरज्यतेऽपरक्तो भवति स्वरितञितः—इत्यादिनात्मनेपदम् ॥ ४९ ॥

(सुबोधिनी) मदमानसमुद्धतं (मदेन दर्पेण मानेन अहंकारेण च समुद्धतम् उद्रिक्तं) नृपं (राजानं) मूढता (हतबुद्धिता) नियमेन (अवश्यं, निश्चितं) न वियुङ्क्ते (न मुञ्चति) अतिमूढः (नितान्तं हतबुद्धिः जनः) नयात् (नीतेः) उदस्यते (उत्क्षिप्यते, हीनो भवति) नयहीनात् (नीतिभ्रष्टात्) जनः (प्रजालोकः) अपरज्यते (विरक्तो भवति ॥४९॥

(समासः) मदमानसमुद्धतम् = मदश्च मानश्च ताभ्यां समुद्धतः तम् । नयहीनात् = नयेन हीनः तस्मात् ॥ ४९ ॥

(वाच्य०) मदमानसमुद्धतः नृपः मूढतया न वियुज्यते । अतिमूढेन नयात् उदस्यते । जनेन नयहीनात् अपरज्यते ॥४९ ॥

(सरलार्थः) अहंकारी जनः मूढो भवति, मूढो नीतिभ्रष्टो भवति, नीतिभ्रष्टः प्रजानां विरागभाजनं भवति ॥ ४९ ॥

(हिन्दी) मद और अहंकार से उद्दण्ड राजा की बुद्धि अवश्य नष्ट होती है, नष्ट बुद्धि वाला राजा नीति से च्युत होता है और नीतिच्युत राजा प्रजा के अनुराग का पात्र नहीं होता ॥४९॥

अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः ।
सुकरस्तरुवत्सहिष्णुना रिपुरुन्मूलयितुं महानपि ॥ ५० ॥

(अन्वयः) अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः, रिपुः, महान्, अपि, तरुवत्, सहिष्णुना, उन्मूलयितुं सुकरः ॥५०॥

(मल्लिनाथः) अपरागोऽप्रीतिः । द्वेष इति यावत् । समीरण इव । तेनेरितश्चोदितः । अत एव क्रमेण शीर्णीभूताकुला चला च मूलसन्ततिः प्रकृत्यादिस्वजनवर्गः शिफासङ्घातश्च यस्य स तथोक्तः । 'मूलं वशीकृते स्वीये शिफातारान्तिकादिषु' इति वैजयन्ती । रिपुर्महानपि तरुवद् वृक्ष इव सहिष्णुना क्षमावतोन्मूलयितुमुद्धर्तुं सुकरः सुसाध्यः । सुकरोन्मूल इत्यर्थः । अत्र मदादेः पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वात्कारणमाला, तरुवदित्युपमा चेति द्वयोः संसृष्टिः ॥ ५० ॥

(सुबोधिनी) अपरागसमीरणेरितः (प्रजानाम् अपरागः समीरण इव तेन ईरितः कम्पितः) अत एव क्रमशीर्णाकुलमूलसन्ततिः ( क्रमेण शीर्णा शिथिलीभूता आकुला चला च मूलसन्ततिः अमात्यादिस्वजनवर्गः—तरुपक्षे शिफासमूहः—यस्य स तथाभूतः) रिपुः (शत्रुः) महान् (प्रबलः,तरुपक्षे विशालः-सन्) अपि, तरुवत् ( वृक्ष इव ) सहिष्णुना ( क्षमावता जनेन ) उन्मूलयितुम् (उद्धर्तुं) सुकरः (सुसाध्यः) भवति ॥ ५० ॥

(समासः) अपरागसमीरणेरितः = अपरागः समीरण इव, तेन ईरितः क्रमशीर्णाकुलमूलसन्ततिः = मूलानां सन्ततिः, मूलसन्ततिः, क्रमेण शीर्णा आकुला च मूलसन्ततिः यस्य सः । उन्मूलयितुम् = उत्पाटितं मूलं यस्य स उन्मूलः, उन्मूलं कर्त्तुमिति उन्मूलयितुम् ॥ ५० ॥

(वाच्य०) अपरागसमीरणेरितेन क्रमशीर्णाकुलमूलसन्ततिना महता उन्मूलयितुं भूयते ॥ ५० ॥

(सरलार्थः) प्रजानां विरागात् अमात्यादयोऽपि शिथिलादराः सुतरां प्रकुपिता भवन्ति। तादृश्यामवस्थायां प्रबलोऽपि रिपुः सहिष्णुना सुखेन जेयो भवति ॥ ५० ॥

(हिन्दी) हवा के झकोरे से शिथिल जड़वाला वृक्ष जैसे सहज उखाड़ा जा सकता है उसी तरह पारस्परिक वैराग्य से राजकार्य में शिथिल ऐसे मंत्रिमण्डल वाला राज्य भी सहज ही शत्रुद्वारा जीता जा सकता है ॥५०॥

अणुरप्युपहन्ति विग्रहः प्रभुमन्तः प्रकृतिप्रकोपजः।
अखिलं हि हिनस्ति भूधरं तरुशाखान्तनिघर्षजोऽनलः ॥५१॥

(अन्वयः) अणुः, अपि, अन्तःप्रकृतिप्रकोपजः, विग्रहः, प्रभुम्, उपहन्ति। (तथाहि) तरुशाखान्तनिघर्षजः, अनलः, अखिलं, भूधरम्, हिनस्ति ॥ ५१ ॥

(मल्लिनाथः) अणुरिति। अणुरल्पोऽप्यन्तः प्रकृतिप्रकोपजोऽन्तरङ्गामात्यापरागसमुत्थः। 'प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे। छन्दः कारणगुह्येषु जन्त्वमात्यादिकेष्वपि' इति वैजयन्ती। विग्रहो वैरं प्रभुमुपहन्ति नाशयति। अत्र दृष्टान्तमाह—तरुशाखान्तानां निघर्षो घर्षणं तज्जोऽनलोऽग्निः, अखिलं भूधरं साकल्येन हिनस्ति दहतीत्यर्थः। अत्रोपमानोपमेयसाधनधर्माणां प्रतिबिम्बतया निर्देशेन दृष्टान्तालङ्कारः ॥ ५१ ॥

(सुबोधिनी) अणुः (अल्पः) अपि, अन्तः प्रकृतिप्रकोपजः (अन्तरङ्गानाम् अमात्यादीनाम् अपरागसमुद्भवः) विग्रहः (वैरं) प्रभुम् (स्वामिनं) उपहन्ति (नाशयति) तथाहि, तरुशाखान्तनिघर्षजः (तरुशाखानां परस्परघर्षणोत्थः) अनलः (अग्निः) भूधरं (पर्वतम्) अखिलं (समग्रं यथा स्यात् तथा) हिनस्ति हि (नाशयति खलु, दहत्येवेत्यर्थः) ॥५१॥

(समासः) अन्तःप्रकृतिप्रकोपजः=अन्तः (मध्यगताः, अन्तरङ्गाः प्रकृतयः तासां प्रकोपः तस्मात् जातः। "अन्तःस्वीकारमध्ययोः" इति मेदिनी

"प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयो"-रिति मेदिनी "अन्तः स्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु" इति च । शाखानाम् अन्तानि शाखान्तानि ( शाखा एव इत्यर्थः ) तरूणां शाखान्तानि तरुशाखान्तानि, तेषां निघर्षः, तस्मात् जातः ॥५१॥

(वाच्य०) अन्तःप्रकृतिप्रकोपजेन अणुना विग्रहेण प्रभुः उपहन्यते । तरुशाखान्तनिघर्षजेन अनलेन भूधरः हिंस्यते ॥५१॥

(सरलार्थः) भूधराङ्गसम्भूतानां भूरुहाणां शाखाघर्षणसमुत्थेन अग्निना यथा समग्रो भूधर एव दह्यते तद्वत् अमात्यादीनामन्तरङ्गानां विरागेण महतोऽपि प्रभोर्नाश एव भवति ॥ ५१ ॥

( हिन्दी ) अन्तरङ्ग मन्त्रिमण्डल के प्रकोप से उत्पन्न स्वल्प विग्रह भी राजा को नाश कर सकता है, जैसे-वृक्षों की शाखाओं के रगड़ से उत्पन्न अग्नि समस्त पर्वत प्रदेश को भस्म करता है।

तथापि कथं वर्द्धमानः शत्रुरुपेक्ष्येत इत्याशङ्क्य दुर्विनीतत्वात् उपेक्ष्य इत्याह-

मतिमान्विनयप्रमाथिनः समुपेक्षेत समुन्नतिं द्विषः ।
सुजयः खलु तादृगन्तरे विपदन्ता ह्यविनीतसम्पदः ॥५२॥

(अन्वयः) मतिमान्, विनयप्रमाथिनः द्विषः, समुन्नतिं, समुपेक्षेत । तादृक्, अन्तरे, सुजयः खलु । हि अविनीतसम्पदः, विपदन्ताः

(मल्लिनाथः) मतिमानिति । मतिमान्प्राज्ञः । विनयं प्रमथ्नातीति विनयप्रमाथिनो दुर्विनीतस्य द्विषः समुन्नतिं वृद्धिं समुपेक्षेत । उपेक्षायाः फलमाह-तादृगविनीतोऽन्तरे कस्मिंश्चिद्रन्ध्रे सुजयः सुखेन जेतुं शक्यः खलु । हि यस्मादविनीतसम्पदो विपदन्ता अनर्थोदर्का इत्यर्थः ॥५२॥

(सुबोधिनी) मतिमान् (बुद्धिमान् जनः) विनयप्रमाथिनः (दुर्विनीतस्य) द्विषः (शत्रोः) समुन्नतिं (वृद्धिं) समुपेक्षेत (न आद्रियेत) तादृक् (तादृशो दुर्विनीतः) अन्तरे (कस्मिंश्चित् छिद्रे) सुजयः (सुखेन जेतुं शक्यो भवति) खलु (निश्चितम्) । हि (यतः) अविनीतसम्पदः (दुर्विनीतानां सम्पत्तयः) विपदन्ताः (विपद्रूपेण परिणता भवन्ति) । मतिमानित्यत्र नयवानिति पाठान्तरम्, नीतिज्ञ इत्यर्थः ॥५२॥

(समासः) विनयप्रमाथिनः = विनयं प्रमथ्नाति (नाशयति) यः तस्य (णिनिप्रत्ययः) विपदन्ताः = विपत् अन्तः (शेषः) यासां ताः । अविनीतसम्पदः = न विनीतः अविनीतः, तस्य सम्पदः ॥५२॥

( वाच्य० ) मतिमता द्विषः समुन्नतिः···समुपेक्ष्येत तादृशा सुजयेन भूयते । अविनीतसम्पद्भिः विपदन्ताभिः भूयते ॥ ५२ ॥

(सरलार्थः) नयविदा राज्ञा दुर्विनीतस्य शत्रोः समुन्नतेः उपेक्षा कार्या यतोहि दुर्विनीतो राजा अवसरे सुखेन जेतुं शक्यो भवति ॥५२॥

( हिन्दी ) नीति कुशल राजा, दुर्विनीत शत्रु के उन्नति की परवाह न करे, ऐसा राजा प्रायः विपद्ग्रस्त हुआ करता है उस समय उसे जीतना कठिन नहीं है । दुर्विनीत राजा की सम्पत्ति अनर्थकारिणी हुआ करती है ॥ ५२ ॥

कथं दुर्विनीतस्य शत्रोः सुजयत्वमित्याशंक्य भेदजर्जरतत्वादित्याह—

लघुवृत्तितया भिदां गतं बहिरन्तश्च नृपस्य मण्डलम् ।
अभिभूय हरत्यनन्तरः शिथिलं कूलमिवापगारयः ॥५३॥

(अन्वयः) लघुवृत्तितया, बहिः, अन्तः, च, भिदां, गतं नृपस्य, मण्डलम् अनन्तरः, आपगारयः, शिथिलं, कूलम्, इव, अभिभूय, हरति

(मल्लिनाथः) लघ्विति । लघुवृत्तितया स्वस्य दुर्वृत्तरूपतया बहिर्मित्रादिजनपदेष्वन्तरमात्यादिषु च भिदां भेदं गतम् 'षिद्भिदादिभ्योऽङ्' इत्यङ् प्रत्ययः । नृपस्य मण्डलं राष्ट्रमनन्तरः सन्निहितो जिगीषुरापगारयो नदीवेगः शिथिलमन्तरभेदजर्जरं कूलमिवाभिभूयाक्रम्य हरति ॥ ५३ ॥

(सुबोधिनी) लघुवृत्ततया (स्वस्य दुर्वृत्ततया) बहिः (जनपदेषु) अन्तः (पुरे) च भिदां गतं ( भेदं प्राप्तं ) नृपस्य (राज्ञः) मण्डलम् ( राष्ट्रम् ) अनन्तरः (सन्निहितः) 'जिगीषुः' आपगारयः (नदीवेगः) शिथिलं (बहिर्जलाघातेन अन्तर्जलप्रवेशेन च जर्जरं ) कूलं ( तीरम् ) इव, अभिभूय (आक्रम्य) हरति (बलात् गृह्णाति) ॥ ५२ ॥

(समासः) लघुवृत्ततया = लघु ( नीचं ) वृत्तं (चरितं) यस्य स लघुवृत्तः, तस्य भावः तत्ता तया । लघुवृत्तितयेति पाठो न मनोरमः, वृत्तिशब्दस्य चरितार्थेऽनभिधानात् । आपगारयः = अपां निवासः आपः (समुद्रः) (तस्य निवासः, इत्यण्), तं गच्छतीति आपगा नदी, तस्या रयः । (वेगः) 'स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा' इति नदीपर्याये अमरः । 'रहस्तरसी तु रयः स्यदः । जवोऽथ' इत्यमरः (जवो वेगः) ॥५३॥

(वाच्य०) अनन्तरेण आपगारयेण इव, ह्रियते ॥५३॥

(सरलार्थः) दुर्विनीतस्य नृपस्य जनपदगतं पुरगतं च राष्ट्रं भेदमुपगतं बुद्ध्वा सन्निहितो जिगीषुराक्रम्य हर्तुं शक्नोति ॥५३॥

(हिन्दी) जिस राजा का मित्रमण्डल और मन्त्रिमण्डल परस्पर भेद को प्राप्त हो चुका उसके राज को शत्रु शीघ्र ही हरण कर सकता है, जैसे—भीतर से जर्जर तट को नदी का वेग एक ही हिलोरे में गिरा देता है ॥ ५३ ॥

अनुशासतमित्यनाकुलं नयवर्त्माकुलमर्जुनाग्रजम् ।
स्वयमर्थ इवाभिवाञ्छितस्तमभीयाय पराशरात्मजः ॥ ५४ ॥

(अन्वयः) इति, आकुलम्, अर्जुनाग्रजं, नयवर्त्म, अनाकुलम्, अनुशासतं, तं, पराशरात्मजः, अभिवाञ्छितः, अर्थः, इव, अभियाय ॥ ५४ ॥

(मल्लिनाथः) अन्विति । इतीत्थमाकुलमरिनिकारस्मरणात्क्षुभितमर्जुनाग्रजं भीमसेनं नयवर्त्म नीतिमार्गमनाकुलमसङ्कीर्णं यथा तथानुशासतमुपदिशन्तम् । 'जक्षित्यादयः षट्' इत्यभ्यस्तान्त्वात्नुमभावः । तं युधिष्ठिरं पराशरात्मजो वेदव्यासः स्वयमभिवांछितोऽर्थ इव । साक्षान्मनोरथ इवेत्युत्प्रेक्षा अभीयाय प्राप्तः ॥ ५४ ॥

(सुबोधिनी) इति (उक्तप्रकारेण) आकुलं (क्षुभितम्) अर्जुनाग्रजं (भीमं) नयवर्त्म (नीतिमार्गम्) अनाकुलं (विशदरूपेण) अनुशासतम् (उपदिशन्तं) तं (युधिष्ठिरं) पराशरात्मजः (पराशरस्य मुनेः पुत्रः वेदव्यासः) स्वयम् (साक्षात्) अभिवाञ्छितः—अर्थः (अभीष्टविषयः) इव, अभीयाय (अभ्याजगाम) ॥४५ ॥

(वाच्य०) इति अनुशासत् सः अभिवाञ्छितेन अर्थेन इव पराशरात्मजेन अभीये ॥ ५४ ॥

(सरलार्थः) यदा युधिष्ठिरो भीमम् एवम् उपदिशतिस्म, तदा युधिष्ठिरस्य मूर्तिमान्मनोरथ इव वेदव्यासो यदृच्छया तत्र प्राप्तः ॥ ५४ ॥

(हिन्दी) युधिष्ठिर इस प्रकार शत्रु से बदला लेने के लिये अत्यन्त व्यग्र भीमसेन को समझा ही रहे थे कि भगवान वेदव्यास युधिष्ठिर के मूर्तिमान् मनोरथ की तरह वहाँ आ पहुचे ॥

मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शमं निरीक्षितैः ।
परितः पटु बिभ्रदेनसां दहनं धाम विलोकनक्षमम् ॥ ५५ ॥
सहसोपगतः सविस्मयं तपसां सूतिरसूतिरापदाम् ।
ददृशे जगतीभुजा मुनिः स वपुष्मानिव पुण्यसञ्चयः ॥५६॥

(अन्वयः) मधुरैः निरीक्षितैः, अवशानि, तिर्य्यञ्चि, शमं लम्भयन् परितः, पटु, एनसां दहनम्, अपि विलोकनक्षमं, धाम, बिभ्रत्, सहसा, उपगतः, तपसां, सूतिः, आपदाम्, असूतिः, सः, मुनिः, वपुष्मान्, पुण्यसञ्चयः, इव, जगतीभुजा, सविस्मयं ददृशे ॥

(मल्लिनाथः) मधुरैरिति । मधुरैः शान्तैर्निरीक्षितैः तवावलोकनैः नपुंसके भावे क्तः । न विद्यते वशमायत्तत्त्वं येषां तान्यवशानि प्रतिकूलानि । 'वशमायत्ततायां च' इति विश्वः । तिर्यञ्चि मृगपक्ष्यादीनि शमं शान्तिं लम्भयन्प्रापयन् । 'लभेश्च इतिनुमागमः । 'गत्यर्थ—'इत्यादिना द्विकर्मकत्वम् । परितः पटूज्ज्वलमेनसाम् । दह्यतेऽनेनेति दहनं निवर्तकं तथापि विलोकनक्षमं दर्शनीयम् । वह्न्यादिविलक्षणमिति भावः । धाम तेजो बिभ्रत् । पुनः सहसोपगतोऽकस्मादागतस्तपसां सूतिः प्रभव आपदामसूतिरप्रभवः निवर्तक इति यावत् । स मुनिर्व्यासो वपुष्मान्देहधारी पुण्यसञ्चयः पुण्यराशिरिवेत्युत्प्रेक्षा जगतीभुजा राज्ञा सविस्मयं ददृशे दृष्टः ॥५६ ॥

(सुबोधिनी) मधुरैः (शान्तैः) निरीक्षितैः (अवलोकनैः) अवशानि (प्रतिकूलानि, दुर्दान्तानि) तिर्य्यञ्चि (पशुपक्ष्यादीनि सत्त्वानि) शमं (शान्ति) लम्भयन् (प्रापयन्—दुःस्वभावं त्याजयन्), परितः (सर्वतोभावेन) पटु (उज्ज्वलम्) एनसां (पापानां) दहनं (नाशकं) 'सत्' अपि विलोकनक्षमं (दर्शनयोग्यं) धाम (तेजः) बिभ्रत् (धारयन्) सहसा (अकस्मात्) उपगतः (प्राप्तः) तपसां सूतिः (प्रभवः), आकर इत्यर्थः ) आपदाम् असूतिः (अप्रभवः, निवर्त्तक इत्यर्थः) स मुनिः (व्यासः) वपुष्मान् (मूर्त्तिमान्) पुण्यसञ्चयः (पुण्यसमूहः, पुण्यराशिः) इव, जगतीभुजा (राज्ञा युधिष्ठिरेण) सविस्मयं (साश्चर्य्यं) ददृशे (दृष्टः) ॥ ५५ ॥ ॥ ५६ ॥

(समासः) अवशानि=नास्ति वशम् (वशम्) (आयत्तता) येषां तानि । विलोकनक्षमम्=विलोकने क्षमं तत् । सविस्मयम्=विस्मयेन सह वर्तमानं यथा स्यात् तथा । जगतीभुजा=जगतीं (पृथिवीं) भुनक्ति (पालयति) यः तेन । 'जगती जगतिश्छन्दो विषयेऽपि क्षितावपि' इत्यमरः । पुण्यसञ्चयः= पुण्यानां सञ्चयः । समूहनिवहव्यूहवारसंघातसञ्चयाः, इत्यमरः ॥ ५५ ॥

(वाच्य०) तिर्य्यञ्चि शमं लम्भयन्तं, धाम बिभ्रतं, सहसा उपगतं, तपसां सूतिम्, वपुष्मन्तं पुण्यसञ्चयम् इव तं मुनिं जगतीभुक् ददर्श ॥ ५५ ॥

(सरलार्थः) तस्मिन् वने ये अशान्ताः पशुपक्षिण आसन् ते यस्य प्रशान्तदृष्टिपातैस्तत्क्षणात् शान्ता बभूवुः, यश्च तेजःपुञ्जकलेवरोऽपि सौम्य-

मूर्तिरासीत् तं सहसागतं तपोनिधिं विपद्भञ्जनं व्यासं मूर्तिमन्तं पुण्यराशिमिव राजा ददर्श ॥ ५५ ॥

(हिन्दी) वेदव्यास भगवान् के अवलोकन से ही वहां के पशु पक्षियों का पारस्परिक विरोध शान्त हो गया। तेजराशि भगवान् वेदव्यास को राजा युधिष्ठिर ने मूर्तिमान् पुण्यराशि की तरह समझा ॥ ५६ ॥

अथोच्चकैरासनतः परार्ध्यादुद्यन्स धूतारुणवल्कलाग्रः ।
रराज कीर्णाकपिशांशुजालः शृङ्गात्सुमेरोरिव तिग्मरश्मिः ॥

(अन्वयः) अथ, उच्चकैः परार्ध्यात्, आसनतः, उद्यन्, धूतारुणवल्कलाग्रः, सः, कीर्णाकपिशांशुजालः, सुमेरोः, शृङ्गात्, (उद्यन्) तिग्मरश्मिः, इव, रराज ॥५७॥

(मल्लिनाथः अथेति । अथ दर्शनानन्तरम् उच्चकैरुन्नतात्परार्ध्याच्छ्रेष्ठात् । 'अर्धाद्यत्' 'परावराधमोत्तमपूर्वाच्च' इति यत्प्रत्ययः । आसनतः सिंहासनादुद्यन्तिष्ठन्नत एव धूतानि कम्पितान्यरुणानि वल्कलाग्राणि यस्य स तथोक्तः । स नृपः कीर्णं विस्तृतमाकपिशमंशुजालं यस्य स तथोक्तः । सुमेरोः शृङ्गादुद्यंस्तिग्मरश्मिरिव रराज ॥ ५७ ॥

(सुबोधिनी) अथ (व्यासस्य दर्शनानन्तरं) उच्चकैः (उच्चात्) परार्ध्यात् (श्रेष्ठात्) आसनतः (कुशासनादपि, सिंहासनात् मन्यमानात्) उद्यन् (उत्तिष्ठन्) अत एव धूतारुणवल्कलाग्रः (धूतानि कम्पितानि अरुणानि रक्तवर्णानि वल्कलाग्राणि यस्य स तथोक्तः) सः (नृपः) कीर्णाकपिशांशुजालः (कीर्णं विक्षिप्तम् आकपिशम् आपिङ्गलम् अंशुजालं किरणसमूहो यस्य स तथोक्तः) सुमेरोः (सुवर्णमयसुमेरुपर्वतस्य) शृङ्गात् (शिखरात्) उद्यन् तिग्मरश्मिः (सूर्यः) इव, रराज (शुशुभे) । कीर्णाकपिशांशुजालैरिति पाठान्तरम् । कीर्णः व्याप्तः । श्यावः स्यात् कपिशः, इत्यमरोक्तेः । कपिशांशुजाल इति पाठो न मनोरमः उपमाया असङ्गतत्वात् । वने कुशासनासीनोऽपि युधिष्ठिरो व्यासागमनजनितप्रहर्षेण पूर्ववत् स्वपुरे सिंहासनमधिरूढमात्मानं मत्वा तस्मादेवासनादुत्थितोऽहमिति मेने ।—तिग्मरश्मिरित्यत्र शीतरश्मिरिति पाठान्तरम् । शीतरश्मिश्चन्द्रः ॥ ५७ ॥

(समासः) धूत०= वल्कलस्य अग्राणि (दशाः) वल्कलाग्राणि, अरुणानि वल्कलाग्राणि अरुण०, धूतानि अरुणवल्कलाग्राणि यस्य सः ।

कीर्णा०=अंशूनां जालम् अंशुजालं, कपिशम् अंशुजालम् यस्य सः कपिशांशुजालः । कड़ारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इत्यमरः । किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः । 'जालं समूह आनाये गवाक्षक्षारकावपि' इत्यमरः । तिग्मरश्मिः=तिग्माः (प्रखराः) रश्मयः (किरणाः) यस्य सः ॥ ५७ ॥

(वाच्य०) आसनात् उद्यतेन धूतारुणवल्कलाग्रेण तेन कीर्णाकपिशांशुजालेन तिग्मरश्मिना इव रेजे ॥ ५७ ॥

(सरलार्थः) वेदव्यासमागतं दृष्ट्वा युधिष्ठिरः ससम्भ्रमम् आसनादुत्थितः । तदा तस्य परिहितवल्कलाग्राणां चाञ्चल्यात् उदयकाले विकीर्णांशुजालस्य सूर्य्यस्येव शोभा बभूव ॥ ५७ ॥

(हिन्दी) वेदव्यास को आते देखकर युधिष्ठिर आसन से उठे। उठते समय पहने हुए वृक्ष के चीर की कान्ति की जगमगाहट उदयकालीन सूर्य की सी मालूम पड़ती थी ॥ ५७ ॥

अवहितहृदयो विधाय सोऽर्हामृषिवदृषिप्रवरे गुरूपदिष्टाम् ।
तदनुमतमलञ्चकार पश्चात् प्रशम इव श्रुतमासनं नरेन्द्रः ॥५८॥

(अन्वयः) सः, नरेन्द्रः, अवहितहृदयः, "सन्" ऋषिप्रवरे, ऋषिवत्, गुरूपदिष्टाम्, अर्हां, विधाय, पश्चात्, तदनुमतम् आसनम् प्रशमः, श्रुतम्, इव, अलञ्चकार ॥ ५८ ॥

(मल्लिनाथः) अवहितेति । सः नरेन्द्रः अवहितहृदयोऽप्रमत्तचित्तः सन् । ऋषिप्रवरे मुनिश्रेष्ठे । ऋषिवदृष्यर्हां । अर्थार्थे वतिप्रत्ययः । गुरूपदिष्टाम् । शास्त्रीयामित्यर्थः । अर्हां पूजाम् । 'गुरोश्च हलः' इत्यकारप्रत्ययः । विधाय पश्चादनन्तरं तदनुमतं तेनानुज्ञातमासनम् । प्रशमः शान्तिः श्रुतं शास्त्रश्रवणमिव । अलञ्चकार उक्तं च—'प्रशमस्तस्य भवत्यलंक्रिया' इति । मुन्याज्ञयोपविष्टवानित्यर्थः ॥ ५८ ॥

(सुबोधिनी) सः नरेन्द्रः (राजा युधिष्ठिरः) अवहितहृदयः (अप्रमत्तचित्तः सन्) ऋषिप्रवरे (मुनिश्रेष्ठे व्यासे) ऋषिवत् (ऋष्यर्हां, मुनिजनोचिताम्) गुरूपदिष्टां (पूर्वं गुरुमुखात् श्रुतां शास्त्रीयां, यद्वा गुरुणा तत्रत्येन धौम्येन उपदिष्टाम् तदवस्थायां यथासम्भवं निर्दिष्टाम्) अर्हां (पूजां; पाद्यार्घ्यासनाद्युपचारैः सत्क्रियां) विधाय (कृत्वा) पश्चात् (अनन्तरं) तदनुमतं (तेन व्यासेन अनुज्ञातम्) आसनं, प्रशमः, (शान्तिः) श्रुतं (शास्त्रज्ञानम्) इव, अलंचकार (शोभयामास, परिगृहीतवान्) इत्यर्थः ॥५८॥

[समासः] अवहितहृदयः = अवहितं हृदयं यस्य सः । ऋषिप्रवरे = ऋषिषु प्रवरः ऋषिप्रवरः तस्मिन् । गुरूपदिष्टाम् = गुरुणा उपदिष्टा ताम् । तदनुमतम् = तेन अनुमतं तत् ॥५८॥

(वाच्य०) अवहितहृदयेन तेन नरेन्द्रेण तदनुमतम् आसनम् प्रशमेन श्रुतमिव अलङ्क्रुते ॥५८॥

(सरलार्थः) अथ युधिष्ठिरो यथाविधि व्यासं सत्कृत्य स्वदत्ते आसने तस्मिन्नुपविष्टे सति, तदनुमतिं प्राप्य स्वयमपि स्वासने उपविवेश ॥५८॥

(हिन्दी) धर्मराज युधिष्ठिर बड़ी सावधानता से ऋषिश्रेष्ठ भगवान् वेदव्यास की यथाविधि पूजा करके उनकी आज्ञा पाकर स्वयं भी अपने आसन पर बैठे ॥५८॥

व्यक्तोदितस्मितमयूखविभासितोष्ठ-
　　स्तिष्ठन्मुनेरभिमुखं स विकीर्णधाम्नः ।
तन्वन्तमिद्धमभितो गुरुमंशुजालं
　　लक्ष्मीमुवाह सकलस्य शशाङ्कमूर्तेः ॥५९॥

(अन्वयः) व्यक्तोदितस्मितमयूखविभासितोष्ठः, विकीर्णधाम्नः, मुनेः, अभिमुखं, तिष्ठन्, सः, इद्धम्, अंशुजालं, तन्वन्तं, गुरुं, अभितः, सकलस्य, शशाङ्कमूर्त्तेः, लक्ष्मीम्, उवाह ॥५९॥

(मल्लिनाथः) व्यक्तेति । व्यक्तोदितैः स्मितमयूखैर्विभासितावोष्ठौ यस्य स तथोक्तः । विकीर्णधाम्नो विस्तीर्णतेजसो मुनेरभिमुखं तिष्ठन् स नृपः । इद्धं दीप्तमंशुजालं तन्वन्तं गुरुं गीष्पतिम् । गुरुर्गीष्पतिपित्रादौ इत्यमरः । अभितः परितः इत्यादिना द्वितीया । अभितोऽभिमुखम् । तिष्ठत इति शेषः, सकलस्य संपूर्णस्य शशाङ्का मूर्तिर्यस्य तस्येन्दोर्लक्ष्मीमुवाह वहति स्म । अत्रोपमेयस्य राज्ञ—उपमानेन्दुधर्मेण लक्ष्म्याः साक्षात्सम्बन्धासंभवात्तत्सदृशीं लक्ष्मीमिवेति प्रतिबिम्बकरणाक्षेपादसंभवद्वस्तुसंबन्धात्पदार्थवृत्तिनिंदर्शनालंकारः । तदुक्तम्—

'प्रतिबिम्बस्याकरणं सम्भवता यत्र वस्तुयोगेन । तत्साम्यमसम्भवता निदर्शना सा द्विधाभिमता' ॥ ५९ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
घण्टापथसमाख्यव्याख्यायां द्वितीयः सर्गः समाप्तः ।

( सुबोधिनी ) व्यक्तोदितस्मितमयूखविभासितोष्ठः (व्यक्तं विस्पष्टम् उदितैः (उत्थितैः) स्मितमयूखैः (मृदुहास्यकिरणैः) विभासितौ दीप्तौ ओष्ठौ यस्य सः तथोक्तः सन्) विकीर्णधाम्नः ( विक्षिप्ततेजसः ) मुनेः (व्यासस्य) अभिमुखं (सन्मुखे) तिष्ठन् (वर्त्तमानः) सः (युधिष्ठिरः) इद्धं (दीप्तम्) अंशुजालं (किरणसमूहं) तन्वन्तं (विस्तारयन्तं) गुरुं (बृहस्पतिम्) अभितः (सन्मुखे वर्त्तमानस्य) सकलस्य (पूर्णस्य) शशाङ्कमूर्तेः (चन्द्रस्य) लक्ष्मीं (शोभां) उवाह (धारयामास) मृगाङ्कमूर्तेरिति पाठान्तरम् ॥५९॥

अयं गुरुचन्द्रयोगः कदाचित् पौर्णमास्यामेव घटते अतः "सकलस्य शशाङ्कमूर्ते"रित्युक्तम्। सा च पूर्णिमा महतीति संज्ञां लभते यथा महाकार्तिक्यादिः। तथाच विष्णुः—

"दृश्येते सहितौ यस्यां दिवि चन्द्रबृहस्पती।
पौर्णमासी तु महती ज्ञेया संवत्सरे तु सा" ॥ इति ॥

राजमार्तण्डोऽपि।

मासर्क्षे यदा ऋक्षे चन्द्रः सम्पूर्णमण्डलः।
गुरुणा याति संयोगं सा तिथिर्महती स्मृता" ॥ इति ॥

(समासः) व्यक्तोदितस्मितमयूखविभासितोष्ठः=व्यक्तम् उदिता व्यक्तोदिताः, स्मितस्य मयूखाः स्मितमयूखाः, व्यक्तोदिताः स्मितमयूखाः व्यक्तोदितस्मितमयूखाः, तैः विभासितौ ओष्ठौ यस्य सः। विकीर्णधाम्नः=विकीर्णं धाम यस्य तस्य। "गृहदेहत्विट् प्रभावधामानि" इत्यमरः। अंशुजालं=अंशूनां जालं तत्। शशाङ्कमूर्तेः=शशः (शशकाकृतिः) अङ्कः (चिन्हं) यस्याः सा शशाङ्का, सा मूर्तिर्यस्य तस्य ॥५९॥

(वाच्यपरिवर्तनम्) व्यक्तोदितस्मितमयूखविभासितोष्ठेन मुनेः अभिमुखं तिष्ठता तेन लक्ष्मीः ऊहे ॥ ५९ ॥

(सरलार्थः) यथा बृहस्पतिग्रहस्य अभिमुखं तिष्ठतः पूर्णचन्द्रस्य शोभा भवति तथा व्यासस्याभिमुखमुपविष्टस्य शोभा बभूव ॥ ५९ ॥

(हिन्दी) बृहस्पति के सामने रहने वाले पूर्ण चन्द्र की जैसी शोभा होती है उसी तरह वेदव्यास भगवान के सामने बैठे हुए युधिष्ठिर की शोभा हुई ॥ ५९ ॥

इति श्रीपाठकोपाह्व गौरीनाथशर्मविरचितया सुबोधिन्याख्यया व्याख्यया सरलार्थया च सहिते किरातार्जुनीये महाकाव्ये द्वितीय सर्गः ॥ २ ॥

# हमारी प्रकाशित पुस्तकें

१ रामायण महाभारत [ काशी की प्रथमा परीक्षा में स्वीकृत अंश सुबोधिनी टीका सहित ] ॥≈)
२ रघुवंश प्रथम सर्ग सुबोधिनी टीका सहित ॥=)
३ रघुवंश पञ्चम सर्ग „ „ ॥)
४ रघुवंश १–२ सर्ग „ „ १॥)
५ रघुवंश २–३ सर्ग मल्लिनाथी, हिन्दी सहित, बिहार परीक्षोपयोगी ।॥)
६ रघुवंश २–४ सर्ग „ „ काशी प्रथमा परीक्षोपयोगी १)
७ रघुवंश ६–१० सर्ग सुबोधिनी २॥)
८ रघुवंश ६–१० सर्ग केवल मल्लिनाथी टीका १)
९ रघुवंश १–३ सर्ग केवल मल्लिनाथी टीका ॥)
१० श्रुतबोध [ प्राचीन संस्करण ] सुबोधिनी टीका सहित सोदाहरण ॥)
११ श्रुतबोध [ बालोपयोगी संस्करण, काशी की प्रथमा में स्वीकृत ] ॥=)
१२ कि[illegible]र्जुनीय [ १–२ सर्ग ] सुबोधिनी टीका सहित १)
१३ कि[illegible]नीय [ सम्पूर्ण ] मल्लिनाथी सहित २॥)
१४ शिशुपालवध १–२ सर्ग सुबोधिनी टीका १)
१५ नैषध महाकाव्य [ १–९ सर्ग ] मल्लिनाथी टीका ४)
१६ अभिज्ञानशाकुन्तल संस्कृत टीका तथा हिन्दी टीका सहित ३॥)
१७ वेणी संहार–सरल संस्कृत टीका तथा हिन्दी में सरलार्थ [यन्त्रस्थ] २॥)
१८ नाट्यशास्त्र प्रथमाध्याय [ भरत मुनिकृत ] हिन्दी टीका सहित ॥)
१९ अलंकार सर्वस्व [ राजानक रुय्यककृत ] २)
२० मीमांसा परिभाषा संस्कृत हिन्दी टीका सहित ।॥)
२१ नीतिसंग्रह [ संक्षिप्त हितोपदेश ] ॥)
२२ छन्दःसंग्रह ≈)
२३ पाणिनीय प्रबोध [ काशी की प्रथमा में स्वीकृत ] पूर्वार्ध १)
२४ पाणिनीय प्रबोध „ „ उत्तरार्ध १)

| | |
|---|---|
| २५ महाकवि भारवि | ।) |
| २६ महाकवि माघ | ।।) |
| २७ मित्रसम्प्राप्ति [ हिन्दी टीका सहित ] | ।।।) |
| २८ पञ्चतन्त्र प्रथम तन्त्र | १) |
| २९ पञ्चतन्त्र द्वितीयतन्त्र मूलमात्र | ।) |
| ३० पञ्चतन्त्र तृतीयतन्त्र | ।=) |
| ३१ पञ्चतन्त्र चतुर्थतन्त्र | ।) |
| ३२ पञ्चतन्त्र पञ्चमतन्त्र | ।) |
| ३३ विदुरनीति १–२ अध्याय हिन्दी टीका सहित | ॥=) |
| ३४ विदुरनीति ३–८ अध्याय हिन्दी टीका सहित | ॥) |
| ३५ योगकर्णिका [ योग शास्त्र का अनूठा ग्रन्थ ] | १॥) |
| ३६ हिन्दी दीपिका | १) |
| ३७ शिवसहस्रनामावली | ।=) |
| ३८ शिवमहिम्न स्तोत्र | –) |
| ३९ आपदुद्धारक बटुकभैरव स्तोत्र | :–) |
| ४० तुलसी [ हिन्दी ] | =) |
| ४१ अमरकोष प्रथम काण्ड, काशी की प्रथमा में स्वीकृत [ हिन्दी टीका सहित ] | ।–) |
| ४२ चन्द्रालोक, काशी की पूर्व मध्यमा में स्वीकृत [ श्री गौरीनाथ पाठक कृत संस्कृत तथा हिन्दी टीका सहित ] | २) |
| ४३ रामनाम लेखनविधि हिन्दी टीका सहित | ।) |

सर्वविध संस्कृत पुस्तकों के मिलने का एकमात्र स्थानः—

मैनेजर, शारदा-भवन

४४, अगस्त्यकुण्ड, ब[illegible]